## उत्क्रमेणोद्गीतिः ॥ ३० ॥

पूर्व्वोक्तात् क्रमाद्विपरीतक्रमः उत्क्रमः। अयमर्थः,—आद्यमर्द्ध-मन्त्ये भवत्यन्त्यमर्द्धमादौ, सा 'उद्गीति'र्नामार्य्या। तत्र पथ्योद्गीतुग्र-दाहरणम् —

१ २ ३ ४ ५ ६ ७ग

ऽ। ।ऽऽ ।। ऽ। ।ऽऽऽ।ऽ ।।ऽ

व्याध इवोद्गीतिरवैः प्रथमं तावन्मनो हरसि।

१ २ ३ ४ ५ ६ ७ग

ऽ।।।।ऽऽ ।।ऽऽ ऽऽ। ऽ।ऽऽऽ

दुर्नयकर विश्राम्यसि पश्चात् प्राणिषु विप्रियैः शल्यैः॥

महाविपुलोद्गीतुग्रदाहरणम्—

१ २ ३ ४ ५ ६ ७ग

ऽऽ।ऽ।ऽऽ।ऽ। ।।ऽ ।ऽ।।ऽ

एषा तवापरोद्गीतिरत्र विपुला परिभ्रमति।

१ २ ३ ४ ५ ६ ७ ग

ऽऽ।ऽ। ऽ ऽ ।।।।ऽऽ। ऽ। ।।ऽऽ

तद्वल्लभापि यत् कीर्त्तिरखिलदिक्पाल-पार्श्वमुप-याति॥

पथ्यामहाचपलोद्गीतुग्रदाहरणम्—

१ २ ३ ४ ५ ६ ७ग

ऽऽ। ऽ।ऽ ऽ । ऽ।ऽऽ।।।ऽ ऽ

उद्गीतिरत्र नित्यं प्रवर्त्तते कामचपलानाम्।

१ २ ३ ४ ५ ६ ७ग

SS । S । SS । S । SS । S । S SS

तस्मान्मुने विमुञ्च प्रदेशमेतं समेतमेताभिः ॥

महाविपुलामहाचपलोद्गीतुग्रदाहरणम्—

१ २ ३ ४ ५ ६ ७ग

। ।S । S । SS । S । S S । S । । S

विपुला पयोधर-श्रोणिमण्डले चक्षुषोश्चपला ।

१ २ ३ ४ ५ ६ ७ग

SS । S । S S । S । S S । S । S । । S

उद्गीतिशालिनी कामिनी च सा वर्णिनां मनो हरति ॥

## अर्द्धे वसुगण आर्य्यागीतिः ॥ ३१ ॥

अष्ट गणाः प्रथमेऽर्द्धे यस्या भवन्ति सा 'आर्य्यागीति'र्नामार्य्या। अष्टमोऽपि गणश्चतुर्म्मात्रिको भवतीत्यर्थः। विशेषाभावात् द्वितीयमप्यर्द्धं तादृशमेव (क)। अत्रापि षष्ठो गणो द्विविकल्प एव लकारः। अर्द्धे इति वर्त्तमाने पुनरर्द्धग्रहणाद् गणग्रहणाच्च द्वयमपि पथ्यादिलक्षणपूर्व्विका आर्य्यागीतिः। पथ्यार्य्यागीतुग्रदाहरणम्—

৩০। আর্য্যাছন্দের প্রথমার্দ্ধ যাহার শেষার্দ্ধ ও শেষার্দ্ধ যাহার প্রথমার্দ্ধ, তাহাকে "উদ্গীতি" বলে।

(क) तदुक्तं वृत्तरत्नाकरे—'आर्य्यापूर्व्वार्द्धं यदि गुरुणैकेनाधिकेन निधने युक्तम्। इतरं तद्वन्निखिलं भवति यदीयमुदितेयमार्य्यागीतिः ॥' एतेन पूर्व्वार्द्धे द्वाविंशन्मात्रा, उत्तरार्द्धे एकोनविंशन्मात्रा आर्य्यागीतौ भवन्तीति मन्यमाना सुल्लमादयोऽपि निराकृताः। "मधुकरविटपानमिता" इत्यादि माघे आर्य्यागीतुग्रदाहरणविरोधाच्च।

१ २ ३ ४ ५ ६ ७ ८

। ।। ।।।।।ऽऽऽऽ ऽऽ। ऽ।ऽ ऽ। ।ऽ

अजमजरममरमेकं प्रत्यक् चैतन्यमीश्वरं ब्रह्म परम्।

१ २ ३ ४ ५ ६ ७ ८

ऽऽ ऽ ऽ ।।ऽ।।ऽ ऽ ऽ। ऽ। ऽऽऽऽ

आत्मानं भावयतो भवमुक्तिः स्यादितीयमार्य्यागीतिः॥

महाविपुलार्य्यागीतुरुदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८

।।ऽ।ऽ। ।।ऽ। ऽ ।ऽऽ ।।।।।।।। ।।ऽ

विपुलाभिलाष-मृगतृष्णिका ध्रुवं हन्ति हरिणमिव हत-हृदयम्।

१ २ ३ ४ ५ ६ ७ ८

। ।ऽ। ऽ।। ।ऽ। ऽ। ऽऽ ।ऽ ।।।।ऽऽ

विपुलात्ममोक्ष-सुखकाङ्क्षिभिस्ततस्त्य-ज्यते विषयरस-सङ्गः॥

पथ्याजघनचपलार्य्यागीतुरुदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८

ऽऽ। ऽ।ऽऽ। ।ऽ ऽऽ। ।।।।ऽ।।ऽ

वाताहतोर्म्मि-माला-चपलं संप्रेक्ष्य विषय-सुखमल्पतरम्।

१ २ ३ ४ ५ ६ ७ ८

ऽऽ ।ऽ।ऽऽ। ऽ। ऽ ऽ। ऽ।ऽऽ। ।ऽ

मुक्त्वा समस्त सङ्गं तपोवनान्याश्रयन्ति तेनात्मविदः॥

महाविपुलामहाचपलार्य्यागीतुग्रदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । । । । । । । ऽ

चपलानि चक्षुरादीनि चित्तहारी च हन्त हतविषयगणः ।

१ २ ३ ४ ५ ६ ७ ८

ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ । । । । । । । । ऽ ऽ ऽ

एकान्तशीलिनां योगिनामतो भवति परमसुखसंप्राप्तिः ॥

इत्यार्य्याधिकारः ।

---

## वैतालीयं द्विःस्वरा अयुक्पादे युग्वसवोऽन्ते ल्गाः ॥३२॥

'ल' इत्यनुवर्त्तते। अयमर्थः :—यत्रायुजि पादे प्रथमे तृतीये च द्विःस्वराश्चतुर्द्दशसंख्यका लकारा भवन्ति, युक्पादे द्वितीये चतुर्थे च द्विर्वसवः षोड़श लकाराः, तं'वैतालीयं' नाम च्छन्दः। तेषां मध्ये द्वयोरपि पादयोरन्ते रेफलकारगकाराः कर्त्तव्याः। आद्ये पादे षट् लकाराः पश्चादवशिष्यन्ते। द्वितीये चाष्टौ। एवं वैतालीयार्द्धं सिध्यति। द्वितीयमपि वैतालीयं तादृशमेव। तत्रोदाहरणम्—

ऽ ऽ । । ऽ । ऽ । ऽ ऽ ऽ ऽ । । ऽ । ऽ । ऽ

क्षुत् क्षी ण श री र स ञ्च या व्य क्ती भू त शि रो ऽस्थि प ञ्ज राः।

৩১। যে ছন্দের প্রথমার্দ্ধ ও শেষার্দ্ধ আট আট গণ দ্বারা নিবদ্ধ, তাহাকে "আর্য্যাগীতি" কহে।

र ल ग

S S I I S I S I S S S S I I S I S I S

क्षी ग्रैः प रु षै स्त वा र यो वै ता ली य त नुं वि तन्व ते ॥

अपि च—तव तन्वि ! कटाक्षवीचितैः प्रसरद्भिः श्रवणान्तगोचरैः ।
विशिखैरिव तीक्ष्णकोटिभिः प्रहृतः प्राणिति दुष्करं नरः ॥

अपि च—शवशोणितपङ्कचर्चितं पुरुषान्त्रग्रथितोर्द्ध्वमूर्द्धजम् ।
वपुरातपवह्निदीपितं वैतालीयमिदं विलोक्यताम् ॥

वैतालियमिति वेतालशब्दात् कृशाश्वादेराकृतिगणत्वात् अण्-प्रत्ययश्चातुरर्थिकः । अत्र पादग्रहणमिदं ज्ञापयति,—यदार्य्यादीनां पादश्चतुर्भाग इति व्यवस्था नास्ति ॥

## औपच्छन्दसकम् ॥ ३३ ॥

तस्मिन् वैतालीये छन्दस्यन्ते गकारश्चेदधिको भवति, त"दौपच्छन्दसक" नाम । तत्रोदाहरणम्—

र ल ग ग

S S I I S I S I S S

वा क्यै र्म्म धु रैः प्र ता र्य पूर्व्वं

৩২। যে ছন্দের ১ম ও ৩য় পাদে ১৪শ লকার, এবং ২য় ও ৪র্থ পাদে ষোড়শ লকার হয় এবং প্রত্যেক পাদের অন্তভাগ রগণ ( SIS একটি লঘুবর্ণ ও একটি গুরুবর্ণ ) দ্বারা নিবদ্ধ হয়, সেই ছন্দকে "বৈতালীয়" কহে।

ऽ ऽ ऽ । । ऽ । ऽ । ऽ ऽ
यः प श्चा द भि स न्द धा ति मि त्रम्
र ल ग ग

ऽ ऽ । । ऽ । ऽ । ऽ ऽ
तं दु ष्ट मतिं वि ग्नि ष्ट गो ष्ठ्या-

ऽ ऽ ऽ । । ऽ । ऽ । ऽ ऽ
मौ प च्छ न्द स कं व द न्ति वा ह्यम् ॥

अपि च—परमर्म्मनिरीक्षणानुरक्तं स्वयमत्यन्तनिगूढचित्तवृत्तिम् ।
अनवस्थितमर्थ लुब्धमारादौपच्छन्दसकं जहीहि मित्रम् ॥

उपच्छन्दःशब्दादरोहणादिपाठात् चातुरर्थिको वुञ्प्रत्ययः ॥

## आपातलिका भ्गौ ग् ॥ ३४ ॥

रेफलकारगकाराणामपवादः । 'द्विःस्वरा अयुक्पादे युग्वसवोऽन्ते' इत्यनुवर्त्तते । पूर्व्वलक्षणयोरन्ते भकारो गकारौ च भवतः, तद् वैतालीय'मापातलिका' नाम । तत्रोदाहरणम्—

भ ग ग
ऽ । । ऽ ऽ । । ऽ ऽ
पि ङ्ग ल के शी क पि ला क्षी

ऽ ऽ ऽ । । ऽ । । ऽ ऽ
वा चा टा वि क टो न्न त द न्ती ।

৩৩। বৈতালীয় নামক ছন্দের প্রত্যেক পাদের শেষে একটি গুরুবর্ণ অধিক হইলে তাহাকে "ঔপচ্ছন্দসক" বলে।

৩৪। পূর্ব্বোক্ত বৈতালীয় ছন্দের রগণ স্থানে ভগণ (ऽ।) ও রগণের পরবর্ত্তী লঘুবর্ণ স্থানে গুরুবর্ণ সন্নিবিষ্ট হইলে তাহাকে "আপাতলিকা" বলে।

आपातलिका अस्थिरेत्यर्थः ॥

## शेषे परेण युङ् न साकम् ॥ ३५ ॥

अत्र वैतालीयाधिकारे येषां लकाराणां नियम उक्तस्तद्व्यतिरिक्तो यो लकारवर्गः स शेषः, तस्मिन्नियमः क्रियते,—युग्लकारः परेण साकं न मिश्रीकर्त्तव्यः, द्वितीयस्तृतीयेन, चतुर्थः पञ्चमेन, युक्पादे षष्ठश्च सप्तमेन। एवं वदता शेषाणां मिश्रीभावोऽप्यनुज्ञातः। अत्रोदाहरणं पूर्व्वोक्तमेव।

## षट् चामिश्रा युजि ॥ ३६ ॥

अत्र द्वितीयचतुर्थयोः पादयोः षड्लकारा अमिश्रा न कर्त्तव्याः, पृथक् पृथक् न प्रयोक्तव्या इत्यर्थः। प्रथमतृतीययोश्च पादयोः स्वरुचिः। तत्रोदाहरणं वैतालीये तावत्—

৩৫। পূর্ব্বোক্ত বৈতালীয় অধিকারে রগণাদি দ্বারা পদের অন্তস্থিত আটটি লকারে বিন্যাস নিয়মিত হইয়াছে, তাহার অবশিষ্ট লকারই শেষশব্দে বুঝিতে হইবে; সুতরাং সেই শেষ, ১ম ও ৩য় পাদের ছয় লকার এবং ২য় ও ৪র্থ পাদের আট লকার সম্বন্ধে এইরূপ নিয়ম করা যাইতেছে যে, লকার পরের সহিত অর্থাৎ

। । । । ऽ । । ऽ । ऽ । ऽ
न व नि शि ता यु ध वृ ष्टि र ग्र तः ।
र लग

। । । । । । । ऽ । ऽ । ऽ
कु व ल य द ल दी र्घ च क्षु षां

। । ऽ ऽ । । ऽ । ऽ । ऽ
प्र म दा नां न क टा च वी चि तम् ॥

औपच्छन्दसके—

र ल ग ग

। । । । । । ऽ । ऽ । ऽ ऽ
प र यु व ति षु पु त्र भा व मा दौ

ऽ ऽ ऽ । । ऽ । ऽ । ऽ ऽ
कृ त्वा प्रा र्थ य ते पु नः प ति त्वम् ।
र ल ग ग

। । । । । । ऽ । ऽ । ऽ ऽ
इ द म प र मि हो च्य ते वि शे षा

ऽ ऽ ऽ । । ऽ । ऽ । ऽ ऽ
दौ प च्छ न्द स कं ख ल स्य वृ त्तम् ॥

দ্বিতীয় লকার তৃতীয়ের সহিত, চতুর্থ লকার পঞ্চমের সহিত ও ষষ্ঠ লকার সপ্তমের সহিত মিশ্রিত হইবে না। এই নিয়ম দ্বারা অন্য লকারের মিশ্রীভাবও অনুজ্ঞাত হইল।

आपातलिकायाम्—

म भ ग ग

। । । । । । । S । । S S
अ भि र म य ति कि न्न र क ण्ठी

S । । S । । S । । S S
हं स ग तिः श्र व णा य त नेत्रा।

भ ग ग

। । । । । । । S । । S S
वि श द क म ल को म ल गा त्री।

। । । । S । । S । । S S
यु व ति रि यं हृ द यं त रु णा नाम् ॥

## पञ्चमेन पूर्वः साकं प्राच्यवृत्तिः ॥ ३७ ॥

इदानीं विशेषलक्षणमाह। शेषे परेण युङ् न साकमित्यनेन पञ्चमचतुर्थयोरेकीभावो निषिद्धः सोऽनेन विधीयते। युजोत्यनुवर्त्तते। यदा युक्पादे पञ्चमेन लकारेण पूर्व्वः सङ्गच्छते, तदा 'प्राच्यवृत्ति'र्नाम वैतालीयं भवति। शेषं यथाप्राप्तम् ॥ तत्रोदाहरणम्—

र ल ग

। । S । । S । S । S
वि पु ला र्थ सु वा च का च राः

৩৬। এই বৈতালীয় অধিকারে দ্বিতীয় ও চতুর্থপাদে ছয়টি লকার অমিশ্রিত অর্থাৎ একক্রমে পৃথক্ পৃথক্ প্রযুক্ত হইবে না। ইহা দ্বারা প্রথম ও তৃতীয়পাদে পৃথক্ পৃথক্ প্রযুক্ত হইতে বাধা নাই।

S I S I I I S I S I S
क स्य ना म न ह र न्ति मा न सम्
र ल ग

I I S I I S I S I S
र स भा व वि शे ष पे श लाः

S I S I I I S I S I S
प्रा च्य वृ त्ति क वि का व्य स म्प दः ॥]

## अयुक्तृतीयेनोदीच्यवृत्तिः ॥ ३८ ॥

'पूर्व्वः साक'मित्यनुवर्त्तते। अयुक्पादे तृतीयेन लकारेण यदि पूर्व्वः संगच्छते, तदा तत् 'उदीच्यवृत्ति'र्नाम वैतालीयम्। शेषं यथाप्राप्तमेव ॥ तत्रोदाहरणम्—

र ल ग

I S I I I S I S I S
अ वा च क म नू र्जि ता च रं

I I S S I I S I S I S
स्तु ति दु ष्टं य ति क ष्ट म क्र मम्।

৩৮। দ্বিতীয় ও চতুর্থ পাদে পঞ্চম লকারের সহিত চতুর্থ লকার মিলিত হইলে, তাহাকে "প্রাচ্যবৃত্তি" বৈতালীয় ছন্দঃ বলে। এই সূত্রটী আটত্রিশ, উনচল্লিশ ও পঁয়ত্রিশ সূত্রের অপবাদরূপে কথিত হইল।

र ल ग

। ऽ । । । ऽ । ऽ । ऽ
प्र सा द र हि त त्व नि ष्य ति

र ल ग

। । ऽ ऽ । । ऽ । ऽ । ऽ
क वि भिः का व्य मु दा च्च वृ त्ति भिः ॥

## आभ्यां युगपत् प्रवृत्तकम् ॥ ३९ ॥

आभ्यां पूर्व्वोक्तलक्षणाभ्यां युगपत् प्रवृत्ताभ्यां 'प्रवृत्तक' नाम वैतालीयम्। युक्पादे पञ्चमेन पूर्व्वः सङ्गच्छते, अयुक्पादे तृतीयेन द्वितीय इत्यर्थः ॥ तत्रोदाहरणम्—

र ल ग

। ऽ । । । ऽ । ऽ । ऽ
इ दं भ र त वं श भू भृ तां

र ल ग

ऽ । ऽ । । । ऽ । ऽ । ऽ
श्रू य तां श्रु ति म नो र सा य नम्।

৩৮। ১ম এবং ৩য় পাদে যদি ৩য় লকারের সহিত ২য় লকার মিলিত অর্থাৎ একটী গুরুবর্ণ দ্বারা নিবদ্ধ হয়, তাহা হইলে তাহাকে"উদীচ্যবৃত্তি"বৈতালীয় বলে।

र लग

। ऽ । । । ऽ । ऽ । ऽ
प वि त्र म धि कं शु भो द यं

र लग

ऽ । ऽ । । । ऽ । ऽ । ऽ
व्या स व क्त्र क थि तं प्र वृ त्त कम् ॥

## अयुक् चारुहासिनी ॥ ४० ॥

यस्य सर्व्वे पादा अयुग्लक्षणयुक्तास्तद्वैतालीयं 'चारुहासिनी' नाम। किं तल्लक्षणम्? चतुर्थमात्रत्वं तृतीयेन पूर्व्वस्य योगः॥ तत्रोदाहरणम्—

र लग

। ऽ । । । ऽ । ऽ । ऽ
म नाक् प्र सृ त द न्त दी धि तिः

र लग

। ऽ । । । ऽ । ऽ । ऽ
स्म रो ल्ल सि त ग ण्ड म ण्ड ला।

र लग

। ऽ । । । ऽ । ऽ । ऽ
क टा क्ष ल लि ता तु का मि नी

৩৯। প্রদর্শিত প্রাচ্যাবৃত্তি ও উদীচ্যবৃত্তি এই দুয়ের লক্ষণান্বিত ছন্দকে "প্রবৃত্ত"ক বৈতালীয় বলে।

र ल ग

। ऽ । । । ऽ । ऽ । ऽ
म नो ह र ति चा रु हा सि नी ।

## युगपरान्तिका ॥ ४१ ॥

युग्लचणयुक्तैश्चतुर्भिः पादैः 'अपरान्तिका' नाम वैतालीयम् । किं तल्लचणम् ? षोडशमात्रत्वं पञ्चकेन पूर्व्वस्य योगः, षसां मात्राणां ( मिश्राणां ) प्रयोगश्च ॥ तत्रोदाहरणम्—

र ल ग

। । । ऽ । । । ऽ । ऽ । ऽ
स्थि र वि ला सं न त मौ क्ति का व ली

र ल ग

। । । ऽ । ऽ ऽ । ऽ । ऽ
क म ल को म ला ङ्गी मृ गी च णा

र ल ग

। । । ऽ । । । ऽ । ऽ । ऽ
ह र ति क स्य हृ द यं न का मि नः

र ल ग

। । । ऽ । । । ऽ । ऽ । ऽ
सु र त के लि कु श लाऽ प रा न्ति का

इति वैतालीयाधिकारः ।

৪০। যে ছন্দের সকল পাদই অযুকূলক্ষণান্বিত অর্থাৎ প্রতিপাদে মোট চৌদ্দ লকার এবং ২য় লকার ৩য়ের সহিত মিলিত, তাহাকে "চারুহাসিনী" বলে।

## गन्ता द्विर्वसवो मात्रासमकं ल् नवमः ॥४२॥

वैतालीयमित्यादिसूत्रात् सप्तम्यन्तपादग्रहणमनुवर्त्तते। 'ल' इति च महानधिकारः। तेनायमर्थः—यत्र पादे गन्ताः सन्तः षोडश लकारा भवन्ति, तन्मात्रासमकं" नाम च्छन्दः। अन्ते द्वाभ्यामेको गुरुः कर्त्तव्यः, नवमश्च लकार (।) एव। 'द्विर्वसव' इति द्विगुणिता वसवो लकाराः, षोडश इत्यर्थः। 'शेषे परेण युङ् न साक'मित्यनुवर्त्तनीयम्॥ तत्रोदाहरणम्—

ल ग
ऽ ऽ । । ऽ । । ऽ ऽ ऽ
अ श्रम श्रु मु खो वि र लै र्द न्तै

ल ग
ऽ ऽ ऽ ऽ । । ऽ ऽ ऽ
ग म्भी रा र्थै मि त ना सा श्रः।

ल ग
ऽ ऽ । । ऽ । । ऽ ऽ ऽ
नि श्वां स ह नुः स्फु टि तैः के शै-

ल ग
ऽ ऽ । । ऽ । । ऽ ऽ ऽ
र्म्मा त्रा स म कं ल भ ते दुः खम्॥

'गन्ते' इत्यनेनैवान्त्यस्य गुरुत्वे सिद्धे पुनर्गन्तग्रहणमातिदेशिकगुरुत्वनिवृत्त्यर्थम्। तेनात्र द्वौ लकारौ (॥) भङ्क्त्वा द्विमात्रिको गुरुः (ऽ) क्रियत इति वाक्यशेषः॥

৪১। যে ছন্দের সকল পাদ যুক্-লক্ষণান্বিত (অর্থাৎ প্রতিপাদে মোট ষোল লকার এবং পঞ্চমের সহিত চতুর্থ মিলিত) তাহাকে "অপরান্তিকা" নামক বৈতালীয় বলে।

## द्वादशश्च वानवासिका ॥४३॥

यस्य मात्रासमकस्य पादे द्वादशो लकारः (।) स्वरूपेणावतिष्ठते, चकारान्नवमश्च, तन्मात्रासमकं 'वानवासिका' नाम ॥ तत्रोदाहरणम्—

ल ल ग
ऽ । । ऽ ऽ । । । । ऽ ऽ
मन्मथचापध्वनिरमणीयः
ल ल ग
। । । । ऽ । । । । । । ऽ ऽ
सुरतमहोत्सवपटहनिनादः ।
ल ल ग
। । ऽ ऽ ऽ । । । । ऽ ऽ
वनवासस्त्रीस्वनितविशेषः
ल ल ग
ऽ । । ऽ ऽ । । । । ऽ ऽ
कस्य न चित्तं रमयति पुंसः ॥

## विश्लोकः पञ्चमाष्टमौ ॥ ४४ ॥

द्वादशग्रहणं नवमग्रहणञ्च निवृत्तम् । यत्र चतुर्षु पादेषु पञ्चमाष्टमौ लकारौ (।) तिष्ठतः, शेषं यथाप्राप्तम्, तन्मात्रासमकं 'विश्लोको' नाम ॥ तत्रोदाहरणम्—

ल ल
ऽ ऽ । । । । । ऽ ऽ ऽ ऽ
स्नातगुणरहितं विश्लोकं

৪২। যে ছন্দের প্রতিপাদের শেষে একটী গুরুবর্ণ থাকিয়া মোট ষোলটি লকার থাকে এবং নবম লকার মিলিত না হয় তাহাকে "মাত্রাসমক" বলে।

৪৩। যে মাত্রাসমক ছন্দের প্রতিপাদে দ্বাদশ লকার ও নবম লকার স্বরূপতঃই বর্ত্তমান থাকে, অর্থাৎ কোনও গুরুবর্ণ-সঙ্গত না হয়, তাহাকে "বানবাসিকা" নামক মাত্রাসমক বলে।

ल ल ग
ऽ । । । । । । ऽ । । ऽ ऽ
दु र्न य क र ण क द र्थि त लो कम् ।

ल ल ग
ऽ ऽ । । । । ऽ । । ऽ ऽ
जा तं म हि त कु ले ऽप्य वि नी तं

ल ल ग
ऽ ऽ । । । । ऽ । । ऽ ऽ
मि त्रं प रि ह र सा धु वि गी तम् ॥

## चित्रा नवमश्च ॥ ४५ ॥

यस्य नवमो लकार (।) एवावतिष्ठते, चकारात् पञ्चमाष्टमौ च, तन्मात्रासमकं 'चित्रा' नाम ॥ तत्रोदाहरणम्—

ल ल ल ग
। । ऽ । । । । । । । ऽ ऽ ऽ
य दि वा ञ्छ सि प र प द मा रो ढुं

ल ल ल ग
ऽ ऽ । । । । । । । । ऽ ऽ
मै त्रीं प रि ह र स ह व नि ता भिः ।

ल ल ल ग
ऽ । । । । । । । । ऽ ऽ ऽ
मु ह्य ति मु नि र पि वि ष या स ङ्गा-

৪৪। যে মাত্রাসমক ছন্দের প্রতিপাদে পঞ্চম এবং অষ্টম লকার (।) স্বরূপতঃই বর্ত্তমান থাকে, তাহাকে "বিশ্লোক" নামক মাত্রাসমক ছন্দ বলে।

ल ल ल ग

ऽ ऽ । । । । । । ऽ ऽ ऽ

च्चि त्रा भ व ति हि म न सो वृ त्तिः ॥

नवम इत्यनुवर्त्तमाने पुनर्नवमग्रहणमुपचित्राप्रतिप्रसवार्थम् ॥

## परयुक्तेनोपचित्रा ॥ ४६ ॥

'परयुक्तेन' दशमेन सहैकीभूतेन नवमेन, 'उपचित्रा' नाम भवति। पूर्व्वं लघुनियमेन लक्षणं प्रोक्तम्। इदं तु गुरुनियमेनोच्यते। तत्रो-दाहरणम्—

ग ग

ऽ ऽ ऽ । । ऽ । । ऽ ऽ

य च्चि त्तं गु रु स क्त मु दा रं

ऽ ऽ ऽ । । ऽ । । ऽ ऽ

वि द्या भ्या स म हा व्य स न ञ्च।

ग ग

ऽ ऽ ऽ । । ऽ । । ऽ ऽ

पृ थ्वी त स्य गु णै रु प चि त्रा

ग ग

ऽ । । ऽ । । ऽ । । ऽ ऽ

च न्द्र म री चि नि भै र्भ व ती यम् ॥

৪৫। যে ছন্দের নবম, পঞ্চম ও অষ্টম লকার স্বরূপে বর্ত্তমান থাকে, তাহাকে "চিত্রা" নামক মাত্রাসমক বলে।

৪৬। যে ছন্দের নবম বর্ণ দশম বর্ণের সহিত একীভূত অর্থাৎ একটি গুরুবর্ণ দ্বারা ব্যবস্থিত হয়, তাহাকে "উপচিত্রা" বলে।

## एभिः पादाकुलकम् ॥ ४७ ॥ (क)

एषां पञ्चानां मध्ये यैः कैश्चिदपि चतुर्भिः पादैर्मात्रासमकं 'पादाकुलकं' नाम। तत्र मात्रासमकविश्लोकवानवासिकोपचित्राणां पादैरुदाहरणम्—

ल ग
। । ऽ ऽ । । । । । । ऽ ऽ
अ लि वा चा लि त वि क सि त चू ते

ल ल ग
ऽ ऽ । । । । ऽ । । ऽ ऽ
का ले म द न स मा ग स दू ते।

ल ल ग
ऽ ऽ ऽ ऽ । । । । ऽ ऽ
स्मृ त्वा का न्तां प रि हृ त सा र्थः

ग ग
ऽ ऽ । । ऽ ऽ । । ऽ ऽ
पा दा कु ल कं धा व ति पा न्थः॥

तथा विश्लोकोपचित्रामात्रासमकोपचित्राणां पादैः 'पादाकुलकम्।' तत्रोदाहरणम्—

ल ल ग
ऽ ऽ । । । । ऽ । । ऽ ऽ
पुं स्को कि ल कृ त शो भ न गी ते

ग ग
ऽ । । । । ऽ ऽ । । ऽ ऽ
द क्षि ण प व न प्रे रि त शी ते।

ल ग
। । । । ऽ ऽ । । ऽ ऽ ऽ
म धु स म येऽ स्मिन् कृ त वि श्लो कः

(क) अस्य संज्ञान्तरमचलधृतिरिति वृत्तरत्नाकरे। यथा—द्विगुणितवसुलघुरचलधृतिरिति।

ग ग

ऽ ऽ । । ऽ ऽ । । ऽ ऽ

पा दा कु ल कं नृ त्य ति लोकः ॥

मात्रासमकस्यैकेन पादेन, द्वाभ्यामुपचित्रायाः, विश्लोकस्यैकेन 'पादाकुलकम्'। तत्रोदाहरणम्—

ल ग

ऽ ऽ ऽ ऽ । । ऽ ऽ ऽ

चि त्तं भ्रा म्य त्य न व स्था नं

ग ग

ऽ ऽ । । ऽ ऽ । । ऽ ऽ

पा दा कु ल क श्लो क स मा नम्।

ग ग

ऽ ऽ ऽ । । ऽ । । ऽ ऽ

का यः का य ति शा य ति श क्ति-

ल ल ग

। । । । । । । । ऽ ऽ ऽ ऽ

स्त द पि न म म प र लो के भ क्तिः ॥

यथा पादाकुलकनाम्नः श्लोकस्य पादेष्वस्थिरता तथेत्यर्थः।

उपचित्रापादेनैकेन, वानवासिकापादेन, पुनरुपचित्रापादाभ्यां 'पादाकुलकम्'। तत्रोदाहरणम्—

ग ग

। । । । ऽ । । ऽ । । ऽ ऽ

प रि हृ त स र्व प रि ग्र ह लो कः

ल ल ग

। । । । ऽ । । । । । । ऽ ऽ

प्र ति दि न व र्द्धि त गु रु त र शो कः।

ग ग

ऽ । । ऽ । । ऽ । । ऽ ऽ
दुः ख वि व र्द्धि त लो च न वा रिः

ग ग

ऽ ऽ । । ऽ ऽ । । ऽ ऽ
पा दा कु ल कं या ति त वा रिः ॥

## गीत्यार्य्या लः ॥ ४८ ॥

यत्र पादे द्विर्व्वसवः षोड़श लकारा भवन्ति, सा 'गीत्यार्य्या' नाम जातिः। 'ल' इत्यनुवर्त्तमाने पुनर्लग्रहणं द्विमात्रिकनिवृत्त्यर्थम् ॥

तत्रोदाहरणम्—

। । । । । । । । । । । । । । । ।
म द क ल ख ग कु ल क ल र व मु ख रि णि

। । । । । । । । । । । । । । । ।
वि क सि त स र सि ज प रि म ल सु र भि णि।

। । । । । । । । । । । । । । । ।
गि रि व र प रि स र स र सि म ह ति ख लु

। । । । । । । । । । । । । । । ।
र ति र ति श य मि ह म म हृ दि वि ल स ति ॥

सर्व्वलघुच्छन्दसि गीत्यार्य्याशब्दस्य प्रवेशयितुमशक्यत्वात्तन्नाम नोक्तम् ॥

৪৭। পূর্ব্বোক্ত পাঁচ প্রকার ছন্দের মধ্যে যে কোন চারিপাদ-বিশিষ্ট ছন্দকে "পাদাকুলক" বলে।

৪৮। যে ছন্দের প্রতি পাদে ষোলটী লঘুবর্ণ থাকে, তাহাকে "গীত্যার্য্যা" নামক জাতি কহে। পূর্ব্ব হইতে ল অধিকার আসিয়া সিদ্ধ থাকিতেও পুনর্ব্বার ল গ্রহণ করিয়া জানাইতেছেন যে, পূর্ব্ব পূর্ব্ব স্থানে যেরূপ একটি গুরুবর্ণ দ্বারা দুইটি লকার বিন্যস্ত করা হইয়াছে, এস্থলে সেরূপ হইবে না।

## शिखा विपर्य्यस्तार्द्धा ॥ ४९ ॥ (क)

सैव गीत्यार्य्या विपर्य्यस्तार्द्धा यदा भवति, तदा 'शिखा' इत्याख्यां लभते। अयमर्थः—यत्रार्द्धं सर्व्वलघु भवति, अर्द्धञ्च सर्व्वगुर्व्विति। एवं तस्या एव विन्यासभेदेन संज्ञाद्वयमाह—

## लः पूर्व्वश्चेज्ज्योतिः ॥ ५० ॥

पूर्व्वश्चेदर्द्धभागः सर्व्वलघुर्द्वात्रिंशल्लकारो भवति, उत्तरश्च सर्व्वगुरुः षोड़शगकार-स्तदा 'ज्योति'र्नाम शिखा भवति ॥

तत्रोदाहरणम्—

। । । । । । । । । । । । । । । ।
य दि सु ख म नु प म म प र म भि ल ष सि
। । । । । । । । । । । । । । । ।
प रि ह र यु व ति षु र ति म ति श य मि ह
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आ त्म ज्यो ति र्यो गा भ्या सा द्
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
दृ ष्ट्वा दुः ख च्छे दं कु र्य्याः ॥

৪৯। সেই গীত্যার্য্যা যদি বিপর্য্যস্তার্দ্ধ হয়, অর্থাৎ পূর্ব্ব অর্দ্ধ-ভাগ বত্রিশটি লঘুবর্ণ দ্বারা নিবদ্ধ এবং অপর অর্দ্ধ-ভাগ ষোলটি গুরুবর্ণ দ্বারা নিবদ্ধ হয়, তবে তাহাকে "শিখা" বলে।

৫০। শিখার মধ্যে আবার বিশেষ এই যে, তাহার পূর্ব্ব ভাগ বত্রিশটি লঘুবর্ণ দ্বারা নিবদ্ধ হইয়া যদি শেষ ভাগ ষোলটি গুরুবর্ণ দ্বারা নিবদ্ধ হয়, তবে তাহাকে "জ্যোতি" নামক শিখা বলে।

(क) अस्यानङ्गक्रीड़ेति संज्ञान्तरं वृत्तरत्नाकरे।

## गश्चेत् सौम्या ॥ ५१ ॥

तस्या एव शिखायाः पूर्व्वार्द्धभागः सर्व्वगुरुः षोड़शगकारश्चेद्-भवति, उत्तरश्च द्वात्रिंशल्लकारो भवति, तदा 'सौम्या' नाम शिखा भवति। तत्रोदाहरणम्—

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

सौम्यां दृष्टिं देहि स्नेहाद्-देहेऽस्माकं मानं मुक्त्वा।

। । । । । । । । । । । । । । । । । । । । । । । । । । । । । । । ।

शशधरमुखि सुखमपनय मम हृदि मनसिजरुजमपहर लघुतरमिह ॥

## चूलिकैकोनत्रिंशदेकत्रिंशदन्ते ग् ॥ ५२ ॥

अर्द्धग्रहणमनुवर्त्तते। यत्र प्रथमेऽर्द्धे एकोनत्रिंशल्लकारा भवन्ति, द्वितीये चार्द्धे एकत्रिंशत्, तयोश्चान्ते द्वौ लकारावुन्मूल्य प्रत्येकमेको गुरुः क्रियते, तत् 'चूलिका' नाम च्छन्दः। अन्ते गिति विशेषोपादान-सामर्थ्यादन्येषां लघुत्वमुक्तं भवति; तेनाद्ये सप्तविंशतिर्लघवोऽन्ते गुरुरेको भवति। द्वितीयेऽप्येकोनत्रिंशल्लघवोऽन्ते गुरुरेकः। तत्रोदाहरणम्—

ग

। । । । । । । । । । । । । । । । । । । । । । । । । । । ऽ

रतिकरमलयमरुति शुभशशमभिहतहिममहसि मधुसमये

ग

। । । । । । । । । । । । । । । । । । । । । । । । । । । । । ऽ

प्रवससि पथिक विरहित कथमिह तु परिहृतयुवतिरतिचपलतया॥

अन्यैः (क) पुनरन्यथैवेदं सूत्रमधीयते, 'चूलिकार्द्धमेकोनत्रिंशदन्ते गिति। तेषामुभयोश्चाप्यर्द्धयोरेकोनत्रिंशन्मात्रा गुर्व्वन्ता भवन्ति॥ तत्रोदाहरणम्।—

৫১। যাহার পূর্ব্বভাগ ষোড়শ গুরুবর্ণে নিবদ্ধ হইয়া শেষভাগ বত্রিশটি লঘুবর্ণে নিবদ্ধ হয়, তাহার নাম 'সৌম্যা" শিখা।

(क) अन्ये त्वत्र रत्नाकरादिभि·'रतिरुचिरे'ति संज्ञान्तरमुक्तं।

ग
। । । । । । । । । । । । । । । । । । । । । । । । । । । । । ऽ
घनपरिमलमिलदलिकुलमुखरितनिखिलकमलमलयपवने ।
ग
। । । । । । । । । । । । । । । । । । । । । । । । । । । । । ऽ
जनयतिमनसिशशिसुखिसुदमतिशयमिहममधुरयमधुना ॥
अर्द्ध ग्रहणादत्र पादव्यवस्था नास्ति ॥

इदानीं गणमात्राच्छन्दसां गुरुलघुसंख्यापरिज्ञानार्थमिदमाह—

## सा ग् येन न समा लां ग्ल इति ॥ ५३ ॥

सा गुरुसंख्या वेदितव्या, येन यावद्भिरक्षरैः लां लघूनां छन्दोमात्राणां । समाः समसंख्याकाः, गुरुलघ्वक्षराणि ग्लौ न स्युरपि तु न्यूनसंख्या एव । ग्ल इत्यक्षराण्यभिधीयन्ते, तेषां गुरुलघुरूपत्वात् । अयमभिप्रायः,—आर्य्यादिषु शास्त्रे यावत्यो मात्रा उपदिष्टास्तावन्त्यक्षराणि यथासंख्यं न पूर्य्यन्ते, सा तत्र गुरुसंख्या वेदितव्या, अवशिष्टा लघुसंख्या । तत्रायमुपयोगः—यदा कदाचित् पृच्छति, चत्वारिंशदक्षरायामार्य्यायां कति गुरवः सम्पद्यन्ते, कति वा लघव इति ? तदा सप्तपञ्चाशन्मात्रोपदिष्टायामार्य्यायां मात्रासंख्यायां चत्वारिंशदक्षरसंख्यामपनयेत्, तत्र ये अवशिष्यन्ते तान् गुरूनुपदिशेत् ।

৫২। যাহার প্রথমভাগে সাতাইশটি লঘুবর্ণ ও শেষে একটি গুরুবর্ণ সমুদয়ে ঊনত্রিশ লকার, এবং শেষভাগে ঊনত্রিশটি লঘুবর্ণ ও অন্তে একটি গুরুবর্ণ সমুদয়ে একত্রিশ লকার তাহার নাম "চূলিকা"। কোন কোন ছন্দঃশাস্ত্রকার এই সূত্রটির "চূলিকার্দ্ধমেকোনত্রিংশদন্তে গ্" এই প্রকার পাঠ সঙ্গত বলিয়া থাকেন, তাঁহাদের মতে চূলিকার প্রত্যেক অর্দ্ধেই ঊনত্রিশটি লঘুবর্ণ ও অন্তে গুরুবর্ণ এই সমষ্টিতে একত্রিশটী লকার থাকা আবশ্যক।

ते च सप्तदशैव। शेषांस्तु त्रयोविंशतिलघुरूपानुपदिशेत् (क)। तद् यथा—

। । । । ऽ ऽ ऽ ऽ । ऽ । । । ऽ । । । । ऽ ऽ ऽ
स्त न यु ग म स्थु स्ना तं स मो प त र व र्त्ति हृ द य श्रो का न्ते:।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २० २१

। । । । ऽ ऽ ऽ ऽ । । । । । । । ऽ । ऽ ऽ ऽ
च र ति वि मु क्ता हा रं व्र त मि व भ व तो रि पु स्त्री णाम् ॥*
२२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४०

इति भट्टहलायुधकृतायां छन्दोवृत्तौ चतुर्थोऽध्यायः ॥ ४ ॥

৫৩। এখন গণমাত্রা দ্বারা গ্রথিত ছন্দঃসমূহের গুরু লঘু সংখ্যা জানাইবার জন্য বলা হইতেছে।—আর্য্যা প্রভৃতি ছন্দের মধ্যে যাহাতে নির্দ্দিষ্ট মাত্রার সংখ্যা হইতে অক্ষরসংখ্যা কম হইবে, তাহাকে গুরু সংখ্যা ও তদ্ভিন্ন অন্যকে লঘু সংখ্যা বলিয়া জানিবে। একটি গুরুবর্ণের দ্বিমাত্রানিবন্ধন গুরুবর্ণে সমাবেশ থাকিলেই মাত্রার সংখ্যা হইতে অক্ষরসংখ্যা কম হয়; সুতরাং কেবল লঘুবর্ণের সমাবেশ থাকিলেই লঘু সংখ্যা হইবে।

---

(क) अस्याभिप्राय: स्पष्टमुच्यते—अस्यामार्य्यायां कति गुरवो लघवश्च भवन्तीति पृष्टे प्रथमं तावत् तामार्य्यां लिखित्वा तस्या: सर्व्वासां मात्राणां गणनां कृत्वा तन्मात्रासङ्ख्यापिण्डं पत्रादौ कुत्रचित् संस्थापनीयम्। पुनस्तस्या एवाक्षराणि गणयित्वा तदक्षरसंख्यापिण्डं मात्रासंख्याया अध: स्थापनीयम्। ततो मात्रासंख्यातोऽक्षरसंख्यामपनयेत्। तत्र येऽङ्का अवशिष्यन्ते तावत् संख्याकास्तत्रार्य्यायां गुरवो भवन्ति। पुनरक्षरसंख्यात एतदवशिष्टगुरुसंख्यामपनयेत्। तत्र येऽङ्का अवशिष्यन्ते तावत्संख्याकास्तत्र लघवो भवन्ति, एतत्प्रक्रियया आर्य्यावैतालीयादिगणमात्राच्छन्दसां गुरुलघुपरिज्ञानं जायते॥

* अस्याम् आर्य्यायां सप्तपञ्चाशन्मात्राश्चत्वारिंशदक्षराणि च सन्ति, तत्र मात्रासंख्यातोऽक्षरसंख्यायां विगतायां सप्तदशाङ्कोऽवशिष्यते, अतोऽस्यां सप्तदश गुरव: सन्तीति ज्ञायते, पुनरक्षरसंख्यात: सप्तदशात्मकगुरुसंख्यायामपनीतायां त्रयोविंशत्यङ्कोऽवशिष्यते, अतोऽस्यां त्रयोविंशतिलघव: सन्तीति निश्चीयते, एवं सर्व्वत्र गणमात्राच्छन्द:सु गुरुलघुपरिज्ञानं कर्त्तव्यम्। उक्तार्थोऽङ्कतोऽपि प्रदर्श्यते। यथा,—

हार्य्याङ्क: ५७, मात्रासंख्यात्मक:। हार्य्याङ्क: ४०, अक्षरसंख्यात्मक:।
हारकाङ्क: ४०, अक्षरसंख्यात्मक:। हारकाङ्क: १७, गुरुसंख्यात्मक:।
लब्धाङ्क: १७, गुरुसंख्यात्मक:। लब्धाङ्क: २३, लघुसंख्यात्मक:।

## पञ्चमोऽध्यायः ।

### वृत्तम् ॥१॥

अधिकारोऽयमाशास्त्रपरिसमाप्तेः । यदित ऊर्द्धमनुक्रमिष्यमाणं तद्वृत्तं वेदितव्यम् । तेन प्राक्तनं लौकिकं छन्दोजातं 'जाति'रित्युच्यते । इत उत्तरञ्च 'वृत्तम्' । तथाचोक्तम्—'पद्यं चतुष्पदं तच्च वृत्तं जातिरिति द्विधा' । गायत्र्यादौ च्छन्दसि वर्त्तते इति 'वृत्तम्' । तच्च स्थिरगुरुलघ्वक्षरविन्यासमिष्यते । पादेन संयोगात् 'पद्यम्' । यथा आर्य्यादिच्छन्दःस्वपि पादव्यवस्था नास्तीति पादौ संयुक्तौ, वृत्ते पुनः पृथग्भवत इत्यर्थः, पादेन संयोगाभावात् । तथाचोक्तम्—'एकदेशस्थिता जातिर्वृत्तं गुरुलघुस्थित'मिति ॥

### सममर्द्धसमं विषमञ्च ॥२॥

समसर्व्वावयवत्वात् 'समम्' । यस्य चत्वारः पादा एकलक्षणयुक्तास्तत् 'समं' वृत्तम् । शेषञ्च संज्ञानुरूपमेव । तत्रार्द्धे समे यस्य तत् 'अर्द्धसमम्' । सर्व्वावयवेभ्योऽर्द्धाभ्याञ्च विगतं समं यस्य तं'द्विषमम्' । एवं त्रिप्रकारमपि वृत्तजातमुक्तम् ॥

১। "বৃত্ত" শাস্ত্র সমাপ্তি পর্য্যন্ত এইটি অধিকার যাইবে। অর্থাৎ ইহার পর শাস্ত্র-সমাপ্তি পর্য্যন্ত যে সমস্ত ছন্দ বলা হইবে, সেই সমস্তই বৃত্তচ্ছন্দ। ছন্দ জাতি ও বৃত্তভেদে দুই প্রকার। এই অধিকার সূত্রদ্বারা ইহার পরবর্ত্তী ছন্দ সকলেরই বৃত্তরূপে নির্দ্দেশ থাকায় পূর্ব্বোক্ত লৌকিক ছন্দঃসকলকেই জাতি বলিয়া বুঝিবে।

২। বৃত্তচ্ছন্দ তিন প্রকার—সম, অর্দ্ধসম ও বিষম। যাহার প্রত্যেক পাদ সমান অর্থাৎ একই লক্ষণে লক্ষিত তাহাকে সম; যাহার অর্দ্ধভাগ সমান ও এক লক্ষণে লক্ষিত, তাহাকে অর্দ্ধসম এবং যাহার সকল পাদই ভিন্ন ভিন্ন

## समं तावत्कृत्वःकृतमर्द्धसमम् ॥३॥

सममिति समवृत्तसंख्योच्यते। तयैव गुणितं तावत्कृत्वःकृत-मुच्यते। एतदुक्तं भवति,—समवृत्तसंख्यागुणिते समवृत्तसंख्यायाः पिण्डे या संख्या निष्पद्यते, तावत्संख्यमर्द्धसमं वेदितव्यम्। तत्र गायत्रे च्छन्दसि समवृत्तसंख्या चतुःषष्टिरष्टमाध्यायसिद्धा (क)। तस्यां चतुःषष्टिसंख्यागुणितायामर्द्धसमवृत्तसंख्या सम्पद्यते—चत्वारि सहस्राणि, षण्णवतिश्च वृत्तानि। अङ्कतोऽपि यथा—६४ × ६४ = ४०९६॥ (ख)

লক্ষণাক্রান্ত, তাহাকে বিষম বলে। নামের অন্বর্থ ধরিয়াই এইরূপ বুঝিতে হইবে।

৩। সূত্রস্থ "সম্" শব্দের অর্থ লক্ষণাদ্বারা সমবৃত্ত সংখ্যা। "তাবৎ-কৃত্বঃকৃতং" শব্দের অর্থ তাহা দ্বারা গুণিত, সুতরাং সূত্রার্থ হইল—সমবৃত্ত সংখ্যা দ্বারা সমবৃত্ত সংখ্যাকে গুণ করিলে যে সংখ্যা গুণফল হইবে, তাহা দ্বারা অর্দ্ধসমবৃত্ত সংখ্যা বুঝিবে। অষ্টমাধ্যায়ে যেমন গায়ত্রীর সমবৃত্ত সংখ্যা নির্দ্দিষ্ট হইয়াছে—চৌষট্টি, এই ৬৪কে ৬৪ দ্বারা গুণ করিলে গুণফল হইবে ৪০৯৬; সুতরাং গায়ত্রী অর্দ্ধসমবৃত্ত সংখ্যা হইল চারি হাজার ছিয়ানব্বই।

---

(क) ग्रन्थस्यास्याष्टमाध्याये १९ ऊनविंशतिसूत्रे द्रष्टव्यम्।

(ख) चतुर्विंशत्यक्षरात्मकस्य गायत्रीच्छन्दसश्चतुष्पादव्यवस्थायां पादाक्षराणि षड़ेव भवन्ति, तेषां वर्णप्रस्तारनियमेन प्रस्तारे क्रियमाणे सर्व्वगुर्वादिसर्व्वलघ्वन्ताश्चतुःषष्टिरेव भेदा जायन्ते। तेषां मध्यात् क्रमव्युत्क्रमप्रकारेण किञ्चिदपि भेदद्वयमादायार्द्धसमवृत्ते कर्त्तव्ये चतुःषष्टिसंख्याश्चतुःषष्टिवारमावृत्तिः कृता भवति। एवं क्रियमाणे चतुःषष्टिसंख्यायैवैषा गुणिता भवति। तथा सति कत्यर्द्धसमवृत्तानि जातानीति तत्-संख्यापरिज्ञानार्थं तद्गुणनप्रकार एव प्रदर्श्यते। यथा—

६४, गुण्याङ्कः।
६४, गुणकाङ्कः, तत्र,

---

२५६ चतुर्भिश्चतुःषष्ट्यां गुणितायां जाताङ्कः।
३८४, पुनः षष्टिभिस्तस्यां गुणितायां जाताङ्कः।
४०९६, सङ्कलनया जाताङ्कः।

## विषमञ्च ॥४॥

अर्द्धसमं तावत्कृत्वःकृतं 'विषमं' भवति। एतदुक्तं भवति—अर्द्धसमवृत्तसंख्या (४०९६) अर्द्धसमवृत्तसंख्ययैव गुणिता विषमवृत्तसंख्या सम्पद्यते। एका कोटिः सप्तषष्टिर्लक्षाणि, सप्तसप्ततिसहस्राणि, द्वे शते षोड़शोत्तरे। अङ्कतोऽपि यथा—१,६७,७७,२१६।

समसमार्द्धसमोपचितं अर्द्धसमं विषमञ्च यथाक्रमं समोपचितं समार्द्धसमाभ्यां चोपचितं वेदितव्यम् ॥*॥

## राशूनम् ॥५॥

तद्विषममर्द्धसमं वा वृत्तं राशूनं कर्त्तव्यम्। मूलराशिः समुदायादपनेतव्यः †। तथाच एका कोटिः, सप्तषष्टिर्लक्षाणि, त्रिसप्तति-

---

* पुनः षसवतुरुत्तरचतुःसहस्रसंख्यकानामर्द्धसमवृत्तभेदानां मध्याद्विभिन्नलक्षणभेदचतुष्टयं भेदद्वयं वा पूर्व्वपूर्वकभेदत्यागक्रमेणादाय विषमवृत्ते क्रियमाणे उक्तसंख्यायास्तावद्वारमावृत्तिः कृता भवति, एवं क्रियमाणे उक्तसंख्ययैव सा गुणिता भवति, तथा सति कति विषमवृत्तभेदा जायन्ते इति तत्संख्याबोधार्थगुणनप्रकारोऽयं प्रदर्श्यते, यथा—

४०९६ गुण्याङ्कः।

४०९६ गुणकाङ्कः।

२४५७६ षड्भिर्गुणिताङ्कः।

३६८६४० नवतिभिर्गुणिताङ्कः।

१६३८४ चतुर्भिर्गुणिताङ्कः।

१, ६७, ७७, २१६ सङ्कलनया जाताङ्कः।

† एतद्गुणिताङ्कसमुदायाद् गुण्याङ्कसमुदायोऽपनेतव्य इत्यर्थः। तत्प्रकारो यथा—

१, ६७ ७७, २१६ एतस्माद् गुणिताङ्कसमुदायात्।

४०९६ एतद्गुण्याङ्कसमुदायेऽपगते।

१, ६७, ७३, १२० एतेऽङ्का अवशिष्यन्ते।

एते अर्द्धसमवृत्तसंख्याविगताः शुद्धविषमवृत्तसंख्याज्ञापका भवन्ति।

पुनः ४०९६ एतस्माद्गुणिताङ्कसमुदायात्।

सहस्राणि, विंशत्युत्तरं शतं शुद्धविषमवृत्तसंख्या। अङ्कतोऽपि १,६७,७२,१२०। चत्वारि सहस्राणि, द्वात्रिंशच्चेति शुद्धार्द्धसमसंख्या। अङ्कतोऽपि ४०३२। उभयशेषोऽयं राशूनमिति॥

## ग्लिति समानी ॥६॥

गकार (ऽ)लकारा-(।)भ्यां यद् वृत्तं समाप्यते तत् 'समानी' नाम। 'पादस्यानुष्टुब् वक्त्र'मित्यतः सूत्रात् ( ५।८ ) सिंहावलोकितन्यायेनानुष्टुब्ग्रहणमनुवर्त्तते। तेनाष्टाक्षरः पादो यावद्भिर्गकारलकारैः पूर्य्यते, तावतामेव ग्रहणम्। तत्रोदाहरणम्—

ऽ । ऽ । ऽ । ऽ । ऽ।ऽ।ऽ।ऽ।

वासवोऽपि विक्रमेण यत्समानतां न याति।

ऽ। ऽ।ऽ।ऽ। ऽ। ऽ। ऽ ।ऽ।

तस्य वल्लभेश्वरस्य केन तुल्यता क्रियेत॥

৪। অর্দ্ধসমবৃত্তসংখ্যা দ্বারা অর্দ্ধসমবৃত্তসংখ্যাকে গুণ করিলে যে সংখ্যা গুণফল হয়, তাহা দ্বারা বিষম বৃত্তসংখ্যা নির্দ্ধারিত হয়। যেমন পূর্ব্বকথিত ৪০৯৬ অর্দ্ধসমবৃত্তসংখ্যাকে ৪০৯৬ দ্বারা গুণ করিলে গুণফল সংখ্যা হয়— ১, ৬৭,৭৭, ২১৬। সুতরাং সমবৃত্ত-সংখ্যা হইল।

৫। সেই বিষম ও অর্দ্ধসমবৃত্ত-সংখ্যা হইতে স্বীয় স্বীয় মূলরাশিসংখ্যা ত্যাগ করিতে হইবে। অর্থাৎ উক্ত বিষমবৃত্ত সংখ্যা হইতে তাহার মূলরাশি অর্দ্ধসমবৃত্ত-সংখ্যা ৪০৯৬ ত্যাগ করিলে শুদ্ধ বিষমবৃত্তসংখ্যা হইবে ১, ৬৭,৭৩,১২০,। এবং প্রদর্শিত অর্দ্ধসমবৃত্তসংখ্যা হইতে তাহার মূলরাশি সমবৃত্ত সংখ্যা ৬৪ ত্যাগ করিলে সমবৃত্ত সংখ্যা হয় ৪০৩২।

---

६४ एतद्गुणाङ्कसमुदायेऽपगते।

४०३२ एतेऽङ्का अवशिष्यन्ते।

एते हि समवृत्तसंख्याविगताः शुद्धार्द्धसमवृत्तसंख्याबोधका भवन्ति।

अपिच—

ऽ ।ऽ ।ऽ। ऽ।  ऽ।ऽ।ऽ ।ऽ।
ओँ नमो जनार्द्दनाय  पापसङ्गमोचनाय ॥
ऽ।ऽ।ऽ।ऽ।  ऽ।ऽ।ऽ।ऽ।
दुष्टदैत्यमर्द्दनाय  पुण्डरीकलोचनाय ॥

## ल्गिति प्रमाणी ॥७॥

लकार (।) गकारा(ऽ)भ्यां यद् वृत्तं समाप्यते तत् 'प्रमाणी' नाम 'नाराच'मित्यपरे। तत्रोदाहरणम्—

।ऽ।ऽ।ऽ।ऽ  ।ऽ।ऽ।ऽ।ऽ
सरोजयोनिरम्बरे  रसातले तथाच्युतः।
।ऽ।ऽ।ऽ।ऽ  ।ऽ।ऽ।ऽ।ऽ
तव प्रमाणमीच्छितुं  क्षमौ न तौ बभूवतुः ॥

## वितानमन्यत् ॥८॥

आभ्यां समानी-प्रमाणीभ्यामन्यदष्टाक्षरपादं छन्दो 'वितानं' नाम। तत्रोदाहरणम्—

ऽऽ ।।ऽऽ ।।  ऽऽ।।ऽऽ ।।
तृष्णां त्यज धर्म्मं भज  पापे हृदयं मा कुरु।

৬। আট অক্ষর এক পাদ—এই ছন্দের পূর্ব্বে পূর্ব্বে অর্থাৎ প্রথম, তৃতীয়, পঞ্চম ও সপ্তম অক্ষর গুরু এবং পর পর অক্ষর অর্থাৎ দ্বিতীয়, চতুর্থ, ষষ্ঠ ও অষ্টম অক্ষর লঘু হইলে "সমানী" বলে। সিংহাবলোকিত ন্যায়ানুসারে নবম সূত্র হইতে অনুষ্টুভ্ অধিকার করিয়া কেবল অষ্টাক্ষর পাদ ধরা হইল।

৭। আট অক্ষর পাদ ছন্দের পূর্ব্ব পূর্ব্ব অক্ষর অর্থাৎ প্রথম, তৃতীয়, পঞ্চম ও সপ্তম অক্ষর হ্রস্ব এবং পর পর অক্ষর অর্থাৎ দ্বিতীয়, চতুর্থ, ষষ্ঠ ও অষ্টম অক্ষর দীর্ঘ হইলে তাহাকে "প্রমাণী" নামক ছন্দ বলে। কোন কোন ছন্দঃশাস্ত্রকার ইহাকে "নারাচ" বলেন।

ऽऽ।।ऽऽ।। ऽऽ।।ऽऽ।।
दृष्टा यदि लक्ष्मीस्तव श्रिष्टाननिशं संश्रय ॥

द्वितीयञ्च—

।।ऽऽ। ।ऽऽ ।।ऽऽ।।ऽऽ
हृदयं यस्य विशालं गगनाभोगसमानम् ।
।।ऽऽ। ।ऽऽ ।।ऽऽ। ।ऽऽ
लभतेऽसौ मणिचित्रं नृपतिर्मूर्द्ध्नि वितानम् ।

अन्यच्च—

ऽऽ।ऽ।ऽ।ऽ ऽऽ।ऽ।ऽ।ऽ
कङ्कालमालधारिणं कन्दर्पदर्पहारिणम् ।
ऽऽ।ऽ।ऽ।ऽ ऽऽ।ऽ।ऽ।ऽ
संसारबन्धमोचनं वन्दामहे त्रिलोचनम् ।

अपि च—

ऽऽ।ऽ।ऽ।ऽ ऽऽ।ऽ।ऽ।ऽ
तस्याः स्मरामि सुन्दरं चन्द्रोपमानमाननम् ।
ऽऽ।ऽ।ऽ।ऽ ऽऽ।ऽ।ऽ।ऽ
कन्दर्पचापभङ्गुर—भ्रूविभ्रमोपशोभितम् ॥

अपि च—

ऽ।।ऽ। ।ऽऽ ऽ।।ऽ।।ऽऽ
अन्यदती हि वितानं श्वेतपटेन यदुक्तम् ।
ऽ।।ऽ। ।ऽऽ ऽ।।ऽ।।ऽऽ
चित्रपदापि च भौ गौ तेन गतार्थमिवैतत् ॥

किञ्च वितानमन्यदिति ब्रुवन् सूत्रकारो वितानस्यानेकप्रकारतां दर्शयति। अन्यथा 'वितानं भौ गौ' इत्येव विदध्यात् ॥

৮। সমানী ও প্রমাণী ভিন্ন আট অক্ষরপাদ ছন্দকে "বিতান" বলে।

## पादस्यानुष्टुब् वक्त्रम् ॥९॥

पादस्येत्ययमधिकार आसप्तमाध्यायपरिसमाप्तेः। अनुष्टुव्वक्त्रमिति च प्राक्पदचतुरूर्द्ध्वादधिकृतं (५।२०) वेदितव्यम्।

## न प्रथमात् स्नौ ॥१०॥

प्रतिषेधार्थं सूत्रमिदम्। तत्र वक्त्रजातौ पादस्य प्रथमाद्वर्णादूर्द्ध्वं सगण (।।ऽ) नगणौ (।।।) न कर्त्तव्यौ॥

## द्वितीयचतुर्थयो रश्च ॥११॥

द्वितीयचतुर्थयोश्च पादयोः प्रथमादूर्द्ध्वं रेफोऽपि (ऽ।ऽ) न कर्त्तव्य इत्युपदेशः॥

## वान्यत् ॥१२॥

सगणनगणाभ्यामन्यत् मगणादित्रिकषट्कमध्ये यत् किञ्चित् त्रिकान्तरं वा कर्त्तव्यम्॥

## य चतुर्थात् ॥१३॥

'य' इति लुप्तविभक्तिको निर्द्देशः। पादस्य चतुर्थादक्षरादूर्द्ध्वं यकारः (।ऽऽ) प्रयोक्तव्यः। सर्व्वेषामुदाहरणम्—

৯। এই সূত্রটিকে অধিকারসূত্র বলিয়া জানিবে। সপ্তম অধ্যায় সমাপ্তি পর্য্যন্ত "পাদস্য" এবং এই অধ্যায়ের বিশ সূত্রের পূর্ব্ব পর্য্যন্ত "অনুষ্টুভ্ বক্ত্র" অধিকৃত হইবে।

১০। এইটি নিষেধ সূত্র। এই বক্ত্র জাতিতে পাদের প্রথম বর্ণের ঊর্দ্ধে সগণ (।।ऽ) ও নগণ (।।।) দেওয়া হইবে না।

১১। দ্বিতীয় এবং চতুর্থ পাদে প্রথম বর্ণের ঊর্দ্ধে রগণ (ऽ।ऽ) দেওয়া হইবে না।

১২। সগণ ও নগণ ভিন্ন "ম" আদিতে আছে,—এমন ছয়টি ত্রিকগণের মধ্যে যে কোন একটি ত্রিকগণ দেওয়া আবশ্যক।

लय यग लय यग

। । ऽ ऽ । ऽ ऽ ऽ । । ऽ ऽ । ऽ ऽ ऽ

नवधाराम्बुसंसिक्तं वसुधागन्धिनिश्वासम् ।

गज यग लत यग

ऽ । ऽ । । ऽ ऽ ऽ । ऽ ऽ । । ऽ ऽ ऽ

किञ्चिदुन्नतघोणाग्रं मही कामयते वक्त्रम् ॥ तथा—

ग भ य ल ल म य ग

ऽ ऽ । । । ऽ ऽ । । ऽ ऽ ऽ । ऽ ऽ ऽ

नीलोत्पलवनेष्वद्य चरन्त्यश्चारुसंरावाः ।

ग म यग लमय ग

ऽ ऽ ऽ ऽ । ऽ ऽ ऽ । ऽ ऽ ऽ । ऽ ऽ ऽ

रामाः कौषेयसंवीताः प्रनृत्यन्तीव कादम्बाः ॥ तथा—

ग र यग गभ यग

ऽ ऽ । ऽ । ऽ ऽ ऽ ऽ ऽ । । । ऽ ऽ ऽ

दुर्भाषितेऽपि सौभाग्यं प्रायः प्रकुरुते प्रीतिः ।

ग र यल ग म यग

ऽ ऽ । ऽ । ऽ ऽ । ऽ ऽ ऽ ऽ । ऽ ऽ ऽ

मातुर्मनो हरन्त्येव दौर्लालित्योक्तिभिर्बालाः ॥

১৩। পাদ-চতুর্থ অক্ষরের ঊর্দ্ধে যগণ ( । ऽ ऽ ) থাকা আবশ্যক।

## पथ्या युजो ज् ॥ १४ ॥

चतुर्थादिति वर्त्तते। यत्र वक्त्रे युजः पादस्य चतुर्थादक्षरादूर्द्ध्वं जकारः ( ।ऽ। ) प्रयुज्यते, तद्वक्त्रं 'पथ्या' नाम। 'य'स्यापवादः। यथा—

ग त य ल ग म ज ल

ऽ ऽ ऽ । । ऽ ऽ । ऽ ऽ ऽ ऽ । ऽ । ।

नित्यं नीतिनिषण्णस्य राज्ञो राष्ट्रं न सीदति।

ल य य ग ग म ज ग

। । ऽ ऽ । ऽ ऽ ऽ ऽ ऽ ऽ ऽ । ऽ । ऽ

नहि पथ्याशिनः काये जायन्ते व्याधिवेदनाः ॥

## विपरीतैकीयम् ॥ १५ ॥

उक्तलक्षणाद्विपरीतलक्षणा एकीयमते 'पथ्या' भवति। यथा—

ग य ज ग ग म य ग

ऽ । ऽ ऽ । ऽ । ऽ ऽ ऽ ऽ ऽ । ऽ ऽ ऽ

भर्त्तुराज्ञानुवर्त्तिनी या स्त्री स्यात् सा स्थिरा लक्ष्मीः।

ग य ज ग ल य य ग

ऽ । ऽ ऽ । ऽ । ऽ । । ऽ ऽ । ऽ ऽ ऽ

स्वप्रभुत्वाभिमानिनी विपरीता परित्याज्या ॥

১৪। যে বক্ত্রের যুক্পাদে অর্থাৎ দ্বিতীয় ও চতুর্থপাদে চতুর্থ বর্ণের উর্দ্ধে জগণ ( । ऽ । ) থাকিবে, তাহাকে 'পথ্যা' বলে। এইটি ১৩ সূত্রের অপবাদ।

১৫। উক্ত লক্ষণের বিপরীত ( অর্থাৎ যাহার প্রথম ও তৃতীয় পাদে চতুর্থ বর্ণের উর্দ্ধে জগণ ( । ऽ । ) বিন্যস্ত থাকে, সেই বক্ত্রকেও কোন মতে 'পথ্যা' বলে।

## चपलायुजो न् ॥ १६ ॥

अयुक्पादस्य यदा चतुर्थादक्षरादूर्द्ध्वं नकारो भवति, युक्पादे य एवावतिष्ठति, तदा 'चपला' नाम सानुष्टुब्वक्त्रम्। तत्रोदाहरणम्—

ग य न ग ग य य ग

ऽ।ऽऽ।।।ऽ ऽ।ऽऽ।ऽऽऽ

क्षीयमाणाग्रदशना वक्त्रनिर्मांसनासाग्रा।

ग य न गल य य ग

ऽ।ऽऽ।।। ऽ।।ऽऽ। ऽऽऽ

कन्यका वाक्यचपला लभते धूर्त्तसौभाग्यम् ॥

## विपुला युग्लः सप्तमः ॥ १७ ॥

अधिकारोऽयम्। य-चतुर्थादित्यनेन सर्व्वत्र यकारे (।ऽऽ) प्राप्ते यदायुक्पादे सप्तमो वर्णो लघुर्भवति, तदा 'विपुला' नाम। ननु पथ्यालक्षणान्तर्भूतत्वात् पुनरुक्तमेतत्? नैवम्, विपुलावर्गस्येदानीमारभ्यमाणत्वात्तद्विनानुपपत्तेः। (२,४) युक्पादे सप्तमेन लघुनाऽवश्यमेव भवितव्यम्। प्रथमतृतीययोश्चैतावता यकारस्यापवादः। तथाच वक्ष्यति—'सर्व्वतः सैतवस्ये'त्यादिना। पथ्यायान्तु यकार (।ऽऽ) एवावतिष्ठते॥

১৬। যে ছন্দে অযুক্‌পাদে অর্থাৎ প্রথম ও তৃতীয় পাদে চতুর্থ বর্ণের ঊর্দ্ধে নগণ (।।।) এবং যুক্‌পাদে অর্থাৎ দ্বিতীয় ও চতুর্থপাদে চতুর্থ বর্ণের ঊর্দ্ধে যগণ থাকিবে, তাদৃশ অনুষ্টুভ্ বক্ত্রকে "চপলা" কহে।

১৭। এইটি অধিকারসূত্র। যে ছন্দের দ্বিতীয় ও চতুর্থপাদে সমস্ত অক্ষর লঘু হইবে, তাহাকে "বিপুলা" কহে। ঊনবিংশ সূত্রের সঙ্গে একযোগে বিপুলার লক্ষণ নিষ্পন্ন হইবে। পথ্যাতে প্রথম ও তৃতীয় পাদে চতুর্থ বর্ণের ঊর্দ্ধে যগণের প্রয়োজন, বিপুলাতে যগণের পরিবর্ত্তে ভগণ, রগণ বা নগণের আবশ্যকতা, ইহাই পথ্যা ও বিপুলার প্রভেদ।

## सर्व्वतः सैतवस्य ॥ १८ ॥

सैतवस्याचार्य्यस्य मतेन युक् (२,४) पादे अयुक् (१, ३) पादे च, सप्तमो लकार (।) एव कर्त्तव्यः। तत्रोदाहरणम्—

गज जग गभ जग

ऽ। ऽ।। ऽ। ऽ ऽ ऽ ।। । ऽ। ऽ

सैतवेन पथार्णवं तीर्णो दशरथात्मजः।

गभ जग लम जग

ऽ ऽ ।।। ऽ। ऽ । ऽ ऽ ऽ। ऽ। ऽ

रक्षःक्षयकरीं पुनः प्रतिज्ञां स्वेन बाहुना ॥

## भ्रौ न्तौ च ॥ १९ ॥

सर्व्वतः सैतवस्येति निवृत्तम्। 'चपलायुजो न्' इत्यस्मादयुग्— ग्रहणमनुवर्त्तते। "विपुला युग्लः सप्तमः" इति सर्व्वमनुवर्त्तते। अयुक् (१, ३) पादे यदा चतुर्थादक्षरात् परतो यकारं बाधित्वा भकाररेफनकारतकारा विकल्पेन भवन्ति, तदासौ 'विपुला' नाम। तत्र भकारेण विपुलोदाहरणम्—

लर भग लम जग

। ऽ। ऽ ऽ।। ऽ । ऽ ऽ ऽ । ऽ। ऽ

इयं सखे चन्द्रमुखी स्मितज्योत्स्ना च मानिनी।

गर भग गज जग

ऽ ऽ। ऽ ऽ।। ऽ ऽ। ऽ। । ऽ। ऽ

इन्दीवराक्षी हृदयं दन्दहीति तथापि मे ॥

১৮। সৈতব আচার্য্য বলেন—যুক্পাদে অযুক্পাদে সকল স্থানেই সপ্তম বর্ণ লঘু হইবে।

'अयुज' इति जातिपक्षे द्वयोरपि पादयोर्ग्रहणम्। व्यक्तिपक्षे पुनरेकस्य। एकपक्षे पुनः प्रथमस्य तृतीयस्य वा। तथाच महाकवीनां प्रयोगाः—

ल र भग ग य ज ग

।ऽ।ऽऽ।।ऽऽ।ऽऽ।ऽ।ऽ

वटे वटे वैश्रवणश्चत्वरे शिवः।

ग य य ग ग भ ज ग

ऽ।ऽऽ।ऽऽ ऽ ऽऽ।।।ऽ।ऽ

पर्व्वते पर्व्वते रामः सर्व्वत्र मधुसूदनः॥

ग भ य ग ग य ज ग

ऽऽ।।।ऽ ऽऽ ऽ।ऽऽ।ऽ।ऽ

देवः स जयति श्रीमान् दण्डधारी महीपतिः।

ग र भ ग ग ज ज ल

ऽऽ।ऽऽ।।ऽ ऽ।ऽ।।ऽ।।

यस्य प्रसादाद्भुवनं शाश्वते पथि तिष्ठति॥

लर भ ग लत जग

।ऽ।ऽ ऽ।। ऽ । ऽऽ। । ऽ । ऽ

उपस्थितं प्राञ्जलिना विनीतेन गरुत्मता।

ग र भ ग ग त ज ग

ऽऽ।ऽ ऽ । । ऽऽऽऽ।।ऽ।ऽ

नारायणं स्तौमि सदा भक्तानां भयनाशनम्॥ इत्यादि—

इदानीं रेफ-(ऽ।ऽ) विपुलोदाहरणम् जातिपद्ये—

ग र र ग ल भ ज ग

ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ । । । ऽ । ऽ

लक्ष्मीपतिं लोकनाथं रथाङ्गधरमीश्वरम् ।

ग र र ग ल य ज ग

ऽ ऽ । ऽ ऽ । ऽ ऽ । । ऽ ऽ । ऽ । ऽ

यज्ञेश्वरं शार्ङ्गपाणिं प्रणमामि त्रयीं तनुम् ॥

व्यक्तिपद्ये प्रथमे पादे—

ल र र ग ग म ज ग

। ऽ । ऽ ऽ । ऽ ऽ ऽ ऽ ऽ ऽ । ऽ । ऽ

महाकविं कालिदासं वन्दे वाग्देवतां गुरुम् ।

ग म य ल ग ज ज ग

ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ । ऽ । । ऽ । ऽ

यज्ज्ञाने विश्वमाभाति दर्पणे प्रतिविम्बवत् ॥

तृतीये पादे—

ग य य ग ग तज ग

ऽ । ऽ ऽ । ऽ ऽ ऽ ऽ ऽ ऽ । । ऽ । ऽ

कामिनीभिः सह प्रीतिः कस्मै नाम न रोचते ।

ल य र ल ग ज ज ग

। । ऽ ऽ ऽ । ऽ । ऽ । ऽ । । ऽ । ऽ

यदि न स्याद्धारिवीचि चञ्चलं हतजीवितम् ॥

इदानीं नकार-( ।।। ) विपुलोदाहरणम्—

ग र न ग ग य ज ग

ऽ ऽ । ऽ । । । ऽ ऽ । ऽ ऽ । ऽ । ऽ

यस्या विभाति विपुला मन्मथस्थानपिण्डिका ।

ग य न ग ग त ज ग

ऽ । ऽ ऽ । । । ऽ ऽ ऽ ऽ । । ऽ । ऽ

या चतुःषष्टिचतुरा सा स्त्री स्यान्नृपवल्लभा ॥

तथैव भारविः—

ल र न ग ल त ज ग

। ऽ । ऽ । । । ऽ । ऽ ऽ । । ऽ । ऽ

युयुत्स नेव कवचं किमामुक्तमिदं त्वया ।

ल र न ग ग ज ज ग

। ऽ । ऽ । । । ऽ ऽ । ऽ । । ऽ । ऽ

तपस्विनो हि वसते केवलाजिनवल्कले ॥

व्यक्तिपत्ते कालिदासः—

ल म न ग ग म ज ग

। ऽ ऽ ऽ । । । ऽ ऽ ऽ ऽ ऽ । ऽ । ऽ

अनाकृष्टस्य विषयै—र्विद्यानां पारदृश्वनः ।

ग ज य ग ग त ज ग

ऽ । ऽ । । ऽ ऽ ऽ ऽ ऽ ऽ । । ऽ । ऽ

तस्य धर्म्मरतेरासीद्—वृद्धत्वं जरसा विना ॥ तथाच—

ल ज य ग ग त ज ग

। । ऽ । । ऽ ऽ ऽ ऽ ऽ ऽ । । ऽ । ऽ

तव मन्त्रकृतो मन्त्रै—र्दूरात् संशमितारिभिः ।

ग म न ग ग ज ज ग

ऽ ऽ ऽ ऽ । । । ऽ ऽ । ऽ । । ऽ । ऽ

प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥

इदानीं तकार-(ऽ ऽ ।) विपुलोदाहरणम् जातिपक्षे—

ग म त ग ल भ ज ग

ऽ ऽ ऽ ऽ ऽ ऽ । ऽ । ऽ । । । ऽ । ऽ

वन्दे देवं सोमेश्वरं जटामुकुटमण्डितम् ।

ग भ त ग ल भ ज ग

ऽ ऽ । । ऽ ऽ । ऽ । ऽ । । । ऽ । ऽ

खट्वाङ्गधरं चन्द्रमः—शिखामणिविभूषितम् ॥

व्यक्तिपक्षे—

ग र त ग ग ज ज ग

ऽ ऽ । ऽ ऽ ऽ । ऽ ऽ । ऽ । । ऽ । ऽ

वन्दे कविं श्रीभारविं लोकसन्तमसच्छिदम् ।

ल म य ग ग त ज ग

। ऽ ऽ ऽ । ऽ ऽ ऽ ऽ ऽ ऽ । । ऽ । ऽ

दिवा दीपा इवाभान्ति यस्याग्रे कवयोऽपरे ॥

तथान्येषामपि प्रयोगो जातिपक्षे—

ग ज य ग ग य ज ग

S । S । । S S S S । S S । S । S

लोकवत् प्रतिपत्तव्यो लौकिकोऽर्थः परीक्षकैः ।

ग भ त ग ल य ज ग

S S । । S S । S । । S S । S । S

लोकव्यवहारं प्रति सदृशौ बालपण्डितौ ॥

इदानीं चकाराकृष्टं मकार-( SSS ) विपुलोदाहरणम् जातिपक्षे—

ग र म ग ग य ज ग

S S । S S S S S S । S S । S । S

सर्वातिरिक्तं लावण्यं बिभ्रती चारुविभ्रमा ।

ग र म ग ग भ ज ग

S S । S S S S S S S S S । S । S

स्त्रीलोकसृष्टिस्त्वन्यैव निःसामान्यस्य वेधसः ॥

व्यक्तिपक्षे श्रीकालिदासः—

ल र म ग ल य ज ग

। S । S S S S S । । S S । S । S

मनोऽभिरामा शृण्वन्ती रथनेमिस्वनोन्मुखैः ।

ग य य ग ल भ ज ग

S । S S । S S S । S S S । S । S

षड्जसंवादिनीः केका द्विधाभिन्नाः शिखण्डिभिः ॥

ल र म ग ग त ज ग

I S I S S S S S S S S I I S I S

अथ प्रदोषे दोषज्ञः संवेशाय विशाम्पतिम्

ग भ य ग ल य ज ग

S S I I I S S S I I S S I S I S

सूनुः सुनृ तवाक् स्रष्टु र्विससर्ज्जोर्ज्जितश्रियम् ॥

तृतीयपादे—

ल र य ग ग भ ज ग

I S I S I S S S S S I I I S I S

अदूरवर्त्तिनीं सिद्धिं राजन् विगणयात्मनः ।

ल र म ग ग ज ज ग

I S I S S S S S S I S I I S I S

उपस्थितेयं कल्याणी नाम्नि कीर्त्तित एव यत् ॥

ग म य ग ग म ज ग

S S S S I S S S S S S S I S I S

श्लाघ्यस्त्यागोऽपि वैदेह्याः पत्युः प्राग्वंशवासिनः ।

ल र म ग ग य ज ग

I S I S S S S S S I S S I S I S

अनन्यजानेः सैवासीत् सैव जाया हिरण्मयी ॥

१४—पि

सकारेणा (॥ऽ) पि क्वचिद्विपुला दृश्यते। यथा,—

लभ य ग ल त ज ग

। ऽ । । । ऽ ऽ ऽ । ऽ ऽ । । ऽ । ऽ

जिते तु लभते लक्ष्मीं मृते चापि वराङ्गनाः।

ल य स ग ग त ज ग

। । ऽ ऽ । । ऽ ऽ ऽ ऽ ऽ । । ऽ । ऽ

क्षणविध्वंसिनि काये का चिन्ता मरणे रणे

सङ्कीर्णाश्च विपुलाप्रकारा दृश्यन्ते। तथा चान्यैरुक्तम्—

लं म न ग ल य ज ग

। ऽ ऽ ऽ । । । ऽ । । ऽ ऽ । ऽ । ऽ

क्वचित् काले प्रसरता क्वचिदापत्य विघ्नता॥

ल र भ ग ल म ज ग

। ऽ । ऽ ऽ । । ऽ । ऽ ऽ ऽ । ऽ । ऽ

शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां कुलम्॥

इत्यादयो विपुलाविकल्पाः सङ्कीर्णाश्चानुकोटिशः काव्येषु दृश्यन्ते। सर्व्वासां विपुलानां चतुर्थो वर्णः प्रायेण गुरुर्भवतीत्याम्नायः॥

## प्रतिपादं चतुर्वृद्ध्या पदचतुरूर्द्ध्वम्॥ २०॥

चतुर्णामक्षराणां वृद्धिश्चतुर्वृद्धिः। अनुष्टुभः पादादूर्द्ध्वं प्रतिपादं चतुरक्षरवृद्ध्या यद् वृत्तं निष्पद्यते तत् 'पदचतुरूर्द्ध्वं' नाम॥

১৯। যে ছন্দের যুক্‌পাদে সপ্তমবর্ণ লঘু এবং অযুক্‌পাদে চতুর্থ অক্ষরের উর্দ্ধে যগণকে বাধা করিয়া ভগণ, রগণ, নগণ বা তগণ থাকিবে, সেই ছন্দকে "বিপুলা" বলিয়া জানিবে।

तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
तस्याः कटाक्षविक्षेपैः ; कम्पिततनुकुटिलै रति दीर्घैः ।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
तत्त क दष्ट इ वेन्द्रिय-शून्यः च्च त चै तन्यः,
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
प द चतु रू र्द्ध न च ल ति पु रु षः प त ति स ह सै व ॥

अत्र गुरुलघुविभागो नेष्यते ॥

## गावन्त आपीड़ः ॥२१॥

गकारौ (ऽऽ) द्वावन्ते चेद्भवतश्चतुर्णामपि पादानां, तत् पदचतुरूर्द्ध 'आपीड़'संज्ञकं भवति। अन्ते गुरुद्वयग्रहणादत्र शेषाणां लघुत्वमभ्यनुज्ञातं सूत्रकारेणेति मन्यामहे। तत्रोदाहरणम्—

। । । । । । ऽ ऽ । । । । । । । । । । । ऽ ऽ
कुसुमितसहकारे हतहिममहिमशुचिमृगाङ्के ।
। । । । । । । । । । । । । । ऽ ऽ
विकसितकमलसरसि मधुसमयेऽस्मिन्,
। । । । । । । । । । । । । । । । । । । ऽ ऽ
प्रवससि पथिक-हतक ! यदि भवति तव विपत्तिः ॥

২০। অনুষ্টুভের পাদ হইতে প্রত্যেক পাদে চা'র চা'র অক্ষর বাড়িলে অর্থাৎ প্রথম পাদে আট অক্ষর, দ্বিতীয় পাদে বার অক্ষর, তৃতীয় পাদে ষোল অক্ষর ও চতুর্থ পাদে বিশ অক্ষর হইলে যে ছন্দ হয়, তাহাকে "পদচতুরূর্দ্ধ" বলে। এই ছন্দে অক্ষরের হ্রস্বদীর্ঘ বিষয়ে কোনও নিয়ম নাই।

২১। পূর্ব্বোক্ত পদচতুরূর্দ্ধের প্রতি পাদের অন্ত দুইটি অক্ষর যদি দীর্ঘ হয়, তবে তাহাকে "আপীড়" বলে। শেষ দুই বর্ণের দীর্ঘত্ববিধান দ্বারা অন্য বর্ণগুলি হ্রস্ব থাকিবে, ইহা সূত্রকারের অভিপ্রেত বলিয়া জানিবে।

## आदौ चेत् प्रत्यापीड़ः ॥ २२ ॥

गकारौ (SS) द्वावादौ चेद्भवतश्चतुर्णामपि पादानां, तदा तत् पद-चतुरूर्द्ध्वं 'प्रत्यापीड़'संज्ञं भवति। अत्रापि पूर्व्ववच्छेषाणां लघुत्वमेव।

तत्रोदाहरणम्—

S S I I I I I I S S I I I I I I I I I I

चित्तंममरमयति, कान्तं वनमिदमु पगिरिनदि।

S S I I I I I I I I I I I I I I

कूजन्मधुकरकलरव कृतजनधृति,

S S-I I I I I I I I I I I I I I I I I I

पुंस्कोकिलमुखरित-सुरभिकुसुमचिततरुतति ॥

## प्रत्यापीड़ो गावादौ च ॥ २३॥

चकारोऽन्त इति समुच्चयार्थः। तस्यैव पदचतुरूर्द्ध्वस्यान्ते आदौ च यदि गकारौ (SS) भवतस्तदा 'प्रत्यापीड़' एव भवति। तत्रोदाहरणम्—

S S I I I I S S S S I I I I I I I I S S

कान्तावदनसरोजं, हृद्यं घनसुरभिमधुरसाढ्यम्।

S S I I I I I I I I I I I I S S

पातुं रहसि सततमभिलषति मनो मे,

S S I I I I I I I I I I I I I I I I S S

किञ्चिन्मुकुलित नयनमविरतमणितरमणीयम् ॥

तदेवं द्विप्रकारः प्रत्यापीड़ो भवति ॥

২২। পূর্ব্বোক্ত পদচতুরূর্দ্ধের প্রতিপাদের আদি দুইটি অক্ষর দীর্ঘ হইলে তাহাকে "প্রত্যাপীড়" জানিবে। এস্থলেও অন্যান্যগুলি পূর্ব্ববৎ লঘু থাকাই সূত্রকারের অভিপ্রেত।

২৩। পূর্ব্বোক্ত পদচতুরূর্দ্ধের প্রতিপাদের প্রথম দুই অক্ষর এবং শেষ দুই অক্ষর গুরু হইলে তাহাকে "প্রত্যাপীড়" বলে, কাজেই 'প্রত্যাপীড়' ছন্দ দুই প্রকার হইল।

## प्रथमस्य विपर्य्यासे मञ्जरीलवल्यमृतधाराः ॥ २४ ॥

आपीड़ग्रहणं निवृत्तम्। तेनैव सम' लघ्वक्षराभ्यनुज्ञानञ्च। तदेव पदचतुरूर्द्ध्वं प्रथमस्य पादस्य विपर्य्यासे 'मञ्जरीलवल्यमृतधारा'भिधानं भवति। प्रथमस्य पादस्य द्वितीयेन विपर्य्यासे मञ्जरी। प्रथमस्य तृतीयेन विपर्य्यासे लवली। प्रथमस्य चतुर्थेन विपर्य्यासेऽमृतधारा।

तत्र मञ्जर्य्युदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
ज न य ति म ह तीं प्री तिं हृ द ये, का मि नां चू त म ञ्ज री।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
मि ल द लि च क्र च ञ्च प रि चु म्बि त के श रा,
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
कोमल म ल य वा त प रि न र्त्ति त त रु शि ख र स्थि ता॥

लवल्य दाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
वि र ह वि धु र हृ ष का ङ्क्ष ना क पो लो प मं,
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
प रि ण ति ध रं पी त पा ण्ड च्छ वि
१ २ ३ ४ ५ ६ ७ ८
ल व ली फ लं नि दा घे,
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
भव ति ज ग ति हिम क र शी त ल म ति स्वा दू ष्ण ह र म्।

अमृतधारोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
परिवाञ्छसि क र्ण र सा य नं स त त म मृ त धा रा भि-
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
र्यदि द्दि दि वा प र मा न न्द र सम्।

१ २ ३ ४ ५ ६ ७ ८ ९ १०११११२१३१४१५१६
चेतः स्मृणु ध र णी ध र वा णी म स्म त म यीं
१ २ ३ ४ ५ ६ ७ ८
तत् का व्य गु ण भू ष ण म् ॥
केचिदापीड़ादिष्वपि पादविपर्य्यासे सति मञ्जर्य्यादिनामानीच्छन्ति।

इति पदचतुरूर्द्ध्वाधिकारः ॥

## उद्गतामेकतः स्जौ स्लौ न्सौ ञ्गौ, भ्नौ ज्लौ ग् स्जौ ग् ॥ २ ॥

'पाद—'इति प्रकृतमनुवर्त्तते। यत्र प्रथमे पादे सकारजकारसकारलकारैर्दृश्याक्षराणि भवन्ति, द्वितीये पादे नकारसकारजकारगकारैर्दशैव, तृतीये पादे भकारनकारजकारलकारगकारैरेकादशैव, चतुर्थे पादे सकारजकारसकारजकारगकारैस्त्रयोदशैव, तद् वृत्त-'मुद्गता'नाम। तत्रोदाहरणम्—

स ज स ल न स ज ग

। । ऽ । ऽ । । । ऽ । । । । । । ऽ । ऽ । ऽ
मृगलोचना शशिमुखी च रुचिरदशना नितम्बिनी।

২৪। যদি দ্বিতীয়াদি পাদের সহিত প্রথম পাদের বিপর্য্যাস হয়, তবে পদ-চতুরূর্দ্ধ যথাসঙ্খ্যে "মঞ্জরী" "লবলী" ও "অমৃতধারা" নামে কথিত হয়। অর্থাৎ আদি পাদের স্থানে দ্বিতীয়পাদ ও দ্বিতীয় পাদের স্থানে আদি পাদ হইলে "মঞ্জরী", আদি পাদের স্থানে তৃতীয়পাদ ও তৃতীয় পাদের স্থানে আদি পাদ হইলে "লবলী", এবং আদিপাদের স্থানে চতুর্থপাদ ও চতুর্থপাদের স্থানে আদিপাদ হইলে "অমৃতধারা" নাম হইবে। কোন কোন ছন্দঃশাস্ত্রকার আপীড়াদি ছন্দেরও এই প্রকার পাদবিপর্য্যয়ে মঞ্জরী প্রভৃতি সংজ্ঞা স্বীকার করিয়া থাকেন। (এই স্থানে পদচতুরূর্দ্ধাধিকার সমাপ্ত হইল)।

भ न ज ल ग स ज स ज ग

S I I I I I I I S I I S I I S I S I I I S I S I S

हंसललित गमना ललना, परिणीयते यदि भवेत् कुलोद्गता ॥

यत्र सूत्रे गकारो (S) लकारो (I) वा श्रूयते, तत्र तेनैव वृत्तस्य पादः परिसमाप्यते। 'उद्गता'मिति कर्म्मविभक्तिश्रवणात् पठेदित्यध्याहार्य्यम्। 'एकत' इति प्रथमं पादं द्वितीयेन सहाविलम्बेन पठेदित्यर्थः। 'उपस्थितप्रचुपितं' (५।२८) पृथगाद्य' मित्यतः सिंहावलोकितन्यायेनाद्यग्रहणमनुवर्त्तनीयम्। तेनाद्यमेव पादमेकतः पठेत्। एकत इति ल्यब्लोपे पञ्चमी ॥

## तृतीयस्य सौरभकं र्नौ भ्गौ ॥ २६ ॥

'तृतीय'स्येति ग्रहणात्तस्या उद्गताया एवान्ये त्रयः पादा गृह्यन्ते। तृतीयपादे तु विशेषः। तृतीये पादे रेफनकारभकारगकारैर्दशाक्षराणि भवन्ति, तत् 'सौरभकं,' नाम। तत्रोदाहरणम्—

स ज स ल न स ज ग

I I S I S I I I S I I I I I S I S I S

विनिवारितोऽपि नयनेन, तदपि किमिहागतो भवान्।

২৫। যে ছন্দের প্রথম পাদে যথাসংখ্যে সগণ, জগণ, সগণ ও একটী হ্রস্ববর্ণ দ্বারা মোট ১০ অক্ষর; দ্বিতীয় পাদে নগণ, সগণ জগণ ও একটি দীর্ঘবর্ণ দ্বারা মোট ১০ অক্ষর; তৃতীয়পাদে ভগণ, নগণ, জগণ, লগণ ও একটি দীর্ঘবর্ণ দ্বারা মোট ১১ অক্ষর; এবং চতুর্থপাদে সগণ, জগণ, সগণ, জগণ ও একটি গুরুবর্ণ দ্বারা মোট ১৩ অক্ষর; সেই বৃত্তকে "উদ্গতা" বলে। ইহা দ্বারা এইরূপ জানিবে যে, এই ছন্দের আদি পাদ দ্বিতীয় পাদের সহিত একতঃ অর্থাৎ অবিলম্বে পড়িতে হইবে।

र न भ ग स ज स ज ग

S I S I I I S I I S I I S I S I I I S I S I S

एतदेव तव सौरभकं, यदुदीरितार्थमपि नावबुध्यसे ॥

## ललितं नौ सौ ॥ २७ ॥

तस्या एव उद्गतायास्तृतीयपादस्थाने यदा नौ सौ भवतस्तदा 'ललितं' नाम वृत्तम्। तत्रोदाहरणम्—

स ज स ल न स ज ग

I I S I S I I I S I I I I I I S I S I S

सततं प्रियं वदमनून—ममलहृदयं गुणोत्तरम्।

न न स स स ज स ज ग

I I I I I I I I S I I S I I S I S I I I S I S I S

सुललितमतिकमनीयतनुं पुरुषं त्यजन्ति न तु जातु योषितः।

## उपस्थितप्रचुपितं पृथगाद्यं म्सौ ज्भौ गौ स्नौ ज्रौ ग्नौ स्नौ न् ज्यौ ॥ २८ ॥

यत्र प्रथमे पादे मकारसकारजकारभकारा गकारौ च भवतः,

২৬। যে ছন্দের তৃতীয়পাদে যথাক্রমে রগণ, নগণ, ভগণ ও একটি দীর্ঘবর্ণ দ্বারা মোট ১০ অক্ষর এবং অন্য তিন পাদ—পূর্ব্বোক্ত উদ্গতা ছন্দের লক্ষণসমন্বিত, তাহাকে "সৌরভক" কহে।

২৭। যে ছন্দের তৃতীয় পাদে যথাসংখ্যে দুইটি নগণ ও দুইটি সগণ দ্বারা মোট দ্বাদশ অক্ষর ও অন্য তিন পাদ পূর্ব্বোক্ত উদ্গতালক্ষণসমন্বিত, তাহাকে "ললিত" নামক ছন্দ বলে।

द्वितीये पादे सकारतकारजकाररेफा गकारश्च, तृतीये पादे नकारौ सकारश्च, चतुर्थे पादे त्रयो नकारा जकारयकारौ च, 'तदुपस्थितप्रचुपित'' नाम वृत्तं भवति। तत्रोदाहरणम्—

म स ज भ ग ग स न ज र ग

S S S I I S I S I S I I S S I I S I I I I S I S I S S

रामा कामकरेणुका मृगायतनेत्रा, हृदयं हरति पयोधरावनम्रा।

न न स न न न ज य

I I I I I I I S I I I I I I I I I S I I S S

इयमतिशयसुभगा, बहुविध-निधुवनकुशला ललिताङ्गी॥

'पृथगाद्य'मिति उद्गतामेकतः पठेदित्यनुवृत्तिशङ्कानिरासार्थम्। अत्र तृतीयपादव्यवस्था सकारस्य विभज्य पाठलिङ्गात्॥

## वर्द्धमानं नौ स्नौ न्सौ॥ २६॥

'तृतीय'स्येत्यनुवर्त्तते। तस्मिन्नुपस्थितप्रचुपिते तृतीयस्य पादस्य स्थाने यदा नकारौ सकारनकारौ पुनर्नकारसकारौ च भवतस्तदा 'वर्द्धमानं' नाम भवति। तत्रोदाहरणम्—

म स ज भ ग ग स न ज र ग

S S S I I S I S I S I I S S I I S I I I I S I S I S S

बिम्बोष्ठी कठिनोन्नतस्तनावनताङ्गी, हरिणीशिशुनयना नितम्बगुर्व्वी।

২৮। যাহার প্রথম পাদে যথাক্রমে মগণ, সগণ, জগণ, ভগণ ও দুইটি গুরু-বর্ণ দ্বারা মোট ১৪ অক্ষর, দ্বিতীয় পাদে সগণ, নগণ, জগণ, রগণ ও একটি গুরু-বর্ণ দ্বারা মোট ১৩ অক্ষর, তৃতীয় পাদে দুইটি নগণ ও সগণ দ্বারা মোট ৯ অক্ষর এবং চতুর্থ পাদে তিনটি নগণ জগণ ও সগণ দ্বারা মোট ১৫ অক্ষর,

न न न ज य

। । । । । । । । । । । S । । S S

जनयति मम मनसि मुदं मदिराक्षी ॥

न न स न न स

। । । । । । । । S । । । । । । । । S

मदकलकरिगमना परिणत-शशिवदना ॥

## शुद्धविराडृषभं तज्रः ॥ ३० ॥

तस्मिन्नेव उपस्थितप्रचुपिते यदा तृतीयस्य पादस्य स्थाने तकार-जकाररेफा भवन्ति, तदा 'शुद्धविराडृषभं' नाम वृत्तं भवति।
तत्रोदाहरणम्—

म स ज भ ग ग स न ज र ग

S S S । । S । S । S । । S S  । । S । । । । S । S । S S

कन्येयं कनकोज्ज्वला मनोहर दीप्तिः, शशिनिर्मलवदना विशालनेत्रा।

त ज र न न न ज य

S S । । S । S । S । । । । । । । । । । S । । S S

पीनोरुनितम्बशालिनी सुखयति हृदयमतिशयं तरुणानाम् ॥

তাহাকে "উপস্থিতপ্রচুপিত" নামক বৃত্ত বলে। এইসূত্রে "পৃথগাদ্যং" এই অংশ দ্বারা উদ্‌গতাছন্দের "একতঃ" অধিকার নিবৃত্ত হইল, অর্থাৎ এই ছন্দে উদ্‌গতার ন্যায় প্রথম পাদ দ্বিতীয় পাদের সহিত অবিলম্বে পড়িতে হইবে না।

২৯। যাহার তৃতীয় পাদে যথাক্রমে দুইটী নগণ, একটী সগণ, নগণদ্বয় ও একটী সগণ দ্বারা মোট ১৮ অক্ষর এবং অন্য তিন পাদ "উপস্থিতপ্রচুপিত" ছন্দের লক্ষণাক্রান্ত, তাহাকে "বর্দ্ধমান" নামক বৃত্ত বলে।

उपस्थितप्रचुपितादीनामस्मिन् प्रवेशयितुं न शक्यन्ते संज्ञाः, इति नोक्ताः ॥

अर्द्धे ॥ ३१ ॥

पूर्व्वमुच्चावचानि च्छन्दांस्युक्तानि, इदानीं नियमेनोच्यन्ते । 'अर्द्धे' इत्यधिकारोऽयमध्यायपरिसमाप्तेः । यदित ऊर्द्धमनुक्रमिष्यामः, अर्द्धे एव तद्वेदितव्यम् ॥

उपचित्रकं सौ स्लौ ग् भौ भ्गौ ग् ॥ ३२ ॥

यस्य प्रथमे पादे सकारास्त्रयो लकारगकारौ च क्रमेण द्वितीये भकारास्त्रयो गकारौ च भवतस्त'दुपचित्रकं' नाम वृत्तम् । अर्द्धशब्दस्य समप्रविभागवचनत्वाद्द्वितीयमप्यर्द्धं तादृशमेव । तत्रोदाहरणम्—

स स स लगभ भ भगग

।।ऽ।।ऽ।।ऽ।ऽ ऽ। । ऽ।।ऽ। ।ऽऽ

उपचित्रकमत्र विराजते, चूतवनं कुसुमैर्व्विकसद्भिः ।
परपुष्टविघुष्टमनोहरं, मन्मथकेलि निकेतनमेतत् ॥

৩০। যাহার তৃতীয় পাদে যথাক্রমে তগণ, জগণ ও রগণ দ্বারা মোট ৯ অক্ষর এবং অন্য তিন পাদ "উপস্থিত প্রচুপিত" ছন্দের লক্ষণাক্রান্ত, তাহাকে "শুদ্ধবিরাড়্‌ষভ" নামক বৃত্ত বলে।

৩১। এইটী অধিকার সূত্র। এই অধ্যায় সমাপ্তিপর্য্যন্ত "অর্দ্ধে" এই সূত্রটী অধিকৃত হইবে, অর্থাৎ অতঃপর অধ্যায়সমাপ্তি পর্য্যন্ত যে সকল সূত্র করা হইবে, সে সমস্তই 'অর্দ্ধের' লক্ষণ হইবে।

৩২। যাহার প্রথম পাদে যথাক্রমে তিনটী সগণ, একটী লঘুবর্ণ ও একটী গুরুবর্ণ দ্বারা মোট ১১ অক্ষর, দ্বিতীয়পাদে তিনটি জগণ ও দুইটি গুরুবর্ণ দ্বারা মোট ১১ অক্ষর, এবং ( সমপ্রবিভাগবাচী অর্দ্ধ শব্দ দ্বারা ) দ্বিতীয়ার্দ্ধও এইরূপ অর্থাৎ তৃতীয় পাদ প্রথম পাদের ও চতুর্থ পাদ দ্বিতীয় পাদের লক্ষণাক্রান্ত, তাহাকে "উপচিত্রক" নামক বৃত্ত বলে।

## द्रुतमध्या भौ भगौ ग् न्जौ ज्यौ ॥ ३३ ॥

यस्य प्रथमे पादे त्रयो भकारा गकारौ च द्वितीये नकारजकारौ जकारयकारौ च, तद्‘द्रुतमध्या’ नाम वृत्तम्। अत्रापि प्रथमद्वितीयाविव तृतीयचतुर्थौ पादौ। तत्रोदाहरणम्—

भ भ भ ग ग न ज ज य

ऽ।। ऽ।। ऽ।। ऽ ऽ ।।।। ऽ। । ऽ । ।ऽ ऽ

यद्यपि शीघ्रगतिर्मृदुगामी बहुधनवानपि दुःखमुपैति।
नातिशयत्वरिता न च मन्दा, नृपतिगतिः कथिता द्रुतमध्या॥

## वेगवती सौ सगौ भौ भगौ ग् ॥ ३४ ॥

यस्य प्रथमे पादे त्रयः सकारा गकारश्चैकः, द्वितीये भकारास्त्रयो गकारौ च भवतस्तद् ‘वेगवती’ नाम वृत्तम्। तत्रोदाहरणम्—

स स स ग भ भ भ ग ग

।। ऽ ।। ऽ। । ऽऽ ऽ।। ऽ।। ऽ।।ऽऽ

तव मुञ्जनराधिप सेनां, वेगवतीं सहते समरेषु।
प्रलयोर्म्मिमिवाभिमुखीं तां कः सकलक्षितिभृन्निवहेषु॥

৩৩। যাহার প্রথম পাদে যথাক্রমে তিনটী ভগণ ও দুইটী গুরুবর্ণ দ্বারা মোট ১১ অক্ষর, দ্বিতীয় পাদে নগণ, দুইটী জগণ ও যগণ দ্বারা মোট ১২ অক্ষর, এবং পূর্ব্ববৎ তৃতীয় পাদ প্রথম পাদের ও চতুর্থপাদ দ্বিতীয় পাদের লক্ষণাক্রান্ত, তাহাকে "দ্রুতমধ্যা" নামক বৃত্ত বলে।

৩৪। যে ছন্দের প্রথম পাদে তিনটী সগণ ও একটী দীর্ঘবর্ণ, দ্বিতীয় পাদে তিনটী ভগণ ও দুইটী দীর্ঘবর্ণ থাকে এবং পূর্ব্বের ন্যায় তৃতীয় পাদ প্রথম পাদের ও চতুর্থ পাদ দ্বিতীয় পাদের লক্ষণসমন্বিত হয়, তাহাকে "বেগবতী" নামক ছন্দ বলে।

अपवाहकौ म्नौ नौ नौ न्सौ गौ नवर्त्तु-
रसेन्द्रियाणि ॥ ३२ ॥

यस्य पादे मकारः षण्नकाराः सकारो गकारौ च, तद् वृत्तं 'अपवाहको' नाम। नवसु, षट्सु षट्सु पञ्चसु च यतिः। तत्रोदाहरणम्—

म न न न न न न स ग ग

ऽ ऽ ऽ, । । ।, । । । । । ।, । । ।, । । ।, । । ।, । । ऽ, ऽ ऽ

श्रीकण्ठं त्रिपुरदहन—ममृतकिरण—शकलललित—शिरसं रुद्रं
भूतेशं हतमुनिमख—मखिलभुवन—नमितचरण—युगमीशानम्।
सर्व्वज्ञं वृषभगमन—महिपतिकृत—वलयरुचिर—करमाराध्यं
तं वन्दे भवभयभिद—मभिमतफल—वितरणगुरु—मुमया युक्तम् ॥

इति कृतयः समाप्ताः ॥

---

इदानीं दण्डकजातयः कथ्यन्ते—

दण्डको नौ रः ॥ ३३ ॥

यत्र पादे द्वौ नकारौ रेफाश्च सप्त भवन्ति, 'दण्डको' नाम सः। उत्कृतेः षड्विंशत्यक्षरायाः समनन्तरं दण्डकस्य पाठात् सप्तविंशत्यक्षरमेव युक्तम्। सर्व्वेषां छन्दसामेकैकाक्षरवृद्ध्या प्रवृत्तेः। इत ऊर्द्धं पुनरेकैक- [रेफ] वृद्ध्या प्रस्तारः। दण्डको नौ र इति श्रवणात्। तत्रोदाहरणम्—

न न र र र र र र र

। । । । । । ऽ । ऽ, ऽ । ऽ, ऽ । ऽ, ऽ । ऽ, ऽ । ऽ, ऽ । ऽ, ऽ । ऽ

इह हि भवति दण्डकारण्यदेशे स्थितिः पुण्यभाजां मुनीनां मनोहारिणी

৩২। যাহার প্রতিপাদে মগণ, ছয়টি নগণ, সগণ ও দুইটী গুরু থাকে, তাহাকে 'অপবাহক' ছন্দ বলে। এই ছন্দে নয়, ছয়, ছয় ও পাঁচ অক্ষরে যতি হইবে।

त्रिदशविजयिवीर्य्यदृप्यद्दशग्रीवलक्ष्मीविरामेण रामेण संसेविते।
जनकयजनभूमिसम्भूतसीमन्तिनीसीमसीतापदस्पर्शपूताश्रमे
भुवननमितपादपद्माभिधानाम्बिकातीर्थयात्रागतानेकसिद्धाकुले ॥
अत्र पादान्ते यतिः ॥

## प्रथमश्चण्डवृष्टिप्रपातः ॥ ३४ ॥

यः सप्तविंशत्यक्षरपादः प्रथमो दण्डकः स 'चण्डवृष्टिप्रपातो' नाम। पूर्व्वमेवोदाहरणम् ॥

## अन्यत्र रातमाण्डव्याभ्याम् ॥ ३५ ॥

रातमाण्डव्याभ्यामृषिभ्यामन्यत्रास्याभिधानमेतदेव, ताभ्यां पुनरन्यैव संज्ञा कृतास्य वृत्तस्य। रातमाण्डव्यग्रहणं पूजार्थम्।

## शेषः प्रचित इति ॥ ३६ ॥

इतश्चण्डवृष्टिप्रपातादूर्द्ध्वं दण्डकप्रस्तारः 'प्रचित' इति संज्ञां लभते। पूर्व्वमेकैकाक्षरक्रमेण छन्दसां वृद्धिरुक्ता, इदानीन्तु रेफोपलक्षिताक्षरत्रयेण वृद्धिः। तत्रोदाहरणम्—

৩৩। এখন দণ্ডকজাতি বলা হইতেছে। যাহার প্রতিপাদে দুইটী নগণ ও সাতটী রগণ হইবে, তাহাকে "দণ্ডক" নামক বৃত্ত বলে। সকল ছন্দেরই এক এক অক্ষর বৃদ্ধি দ্বারা প্রবৃত্তি হেতু ষড়্‌বিংশতি অক্ষর উৎকৃতির পর দণ্ডকের প্রস্তারবশতঃ ইহাতে সপ্তবিংশতি অক্ষর হইবে। 'দণ্ডকো নৌ রঃ' এই বিধান-সামর্থ্যে ইহার পর এক এক অক্ষর বৃদ্ধি দ্বারা "প্রস্তার" কথিত হইবে।

৩৪। সাতাইশ অক্ষরবিশিষ্ট যে প্রথম দণ্ডক, তাহাকে "চণ্ডবৃষ্টি-প্রপাত" বলে।

৩৫। রাত এবং মাণ্ডব্য ঋষি অন্য বৃত্তস্থানে এই নামের (চণ্ডবৃষ্টিপ্রপাতের) উল্লেখ করিয়াছেন এবং এই বৃত্তস্থলে নামান্তর ব্যবহার করিয়াছেন।

न न र र र र र र र र

I I I, I I I, S I S, S I S, S I S, S I S, S I S, S I S, S I S, S I S

प्रथमकथितदण्डकस्य चण्डवृष्टिप्रपाताभिधानोमुनेः पिङ्गलाचार्य्यनाम्नो मतः
प्रचित इति ततः परं दण्डकानामियं जातिरेकैकरेफाभिवृद्ध्या
यथेष्टं भवेत्।
स्वरुचिरचितसंज्ञया तद्विशेषैरशेषैः पुनः काव्यमन्येऽपि
कुर्व्वन्तु वागीश्वराः
भवति यदि समानसंख्याक्षरैर्यत्र पादव्यवस्था ततो दण्डकः
पूज्यतेऽसौ जनैः ॥

अत्र पादान्ते यतिः ॥

इति दण्डकाः समाप्ताः ॥ ७

इति श्रीभट्टहलायुधकृतायां छन्दोवृत्तौ सप्तमोऽध্যায়ঃ ॥ ७

৩৬। এই চণ্ডবৃষ্টিপ্রপাত উর্দ্ধ হইতে "দণ্ডকপ্রস্তারে"র "প্রচিত" নাম হইবে। পূর্ব্বে ছন্দঃসমূহের এক এক অক্ষর বৃদ্ধির কথা বলা হইয়াছে, এখন রেফোপলক্ষিত অক্ষর তিনটি দ্বারা ইহার বৃদ্ধি কথিত হইতেছে।

সপ্তম অধ্যায় সমাপ্ত ॥ ৭

# अष्टमोऽध्यायः

## अत्रानुक्तं गाथा ॥ १ ॥

अत्र शास्त्रे नामोद्देशेन यन्नोक्तं छन्दः प्रयोगे च दृश्यते, तत् 'गाथे'ति मन्तव्यम् । (क)

तत्र त्रिष्टुभि—

## कुड्मलदन्ती भतौ न्गौ गिन्द्रियरसाः ॥२॥

यस्य पादे भगणतगणौ नगणो गकारौ च भवतस्तद् वृत्तं 'कुड्मल-दन्ती' नाम गाथा । पञ्चभिः, षड्भिश्च यतिः । तत्रोदाहरणम्—

भ त नगग भ त नगग

ऽ। ।, ऽ ऽ ।, । । ।, ऽ ऽ ऽ । ।, ऽ ऽ ।, । । ।, ऽ ऽ

कुड्मलदन्ती विकटनितम्बा किन्नरकण्ठी लघुतरमध्या ।
बिम्बफलोष्ठी मृगशिशुनेत्रा मित्र भवन्तं सुखयतु कान्ता ॥

जगत्याम्—

১। এই ছন্দঃশাস্ত্রে যে ছন্দের নাম উল্লেখ করা হয় নাই, অথচ প্রয়োগ দেখা যায়, তাহাকে 'গাথা' বলিয়া জানিবে।

২। যাহার প্রতিপাদে ভগণ, তগণ, নগণ, গুরুদ্বয় এবং পাঁচ ও ছয় অক্ষরে যতি থাকে, তাহার নাম 'কুড্মলদন্তী'।

(क) नन्वत्रानुक्तमित्यनेन केषां छन्दसां ग्रहणं, सर्वाण्येव छन्दांसि छन्दःशास्त्रे उक्तानि ? उच्यते—यद्यपि छन्दःशास्त्रे सर्व्वाण्येव छन्दांस्युक्तानि, तथापि प्रस्तारसंख्यया गृह्याहितया नामनिर्द्देशेन नोक्तानि, प्रस्तारसंख्यया संज्ञानिर्द्देशस्तु युगमन्वन्तरादिष्वपि न निष्पद्यते, अतः प्राचीनमुनिपरम्पराप्रसिद्धानि सामान्यादीनि वृत्तानि पञ्चमषष्ठसप्तमाध्यायेषु दर्शितानि।

### वरतनुर्नजौ जरौ षड्भिः ॥ ३ ॥

यस्य पादे नगणजगणौ जगणरगणौ च, तद् वृत्तं 'वरतनु'र्नाम गाथा। षड्भिः षड्भिश्च यतिः। तत्रोदाहरणम्—

न ज ज र न ज ज र

। । । । ऽ । । ऽ । ऽ । ऽ । । । । ऽ । । ऽ । ऽ । ऽ

अयि विजहीहि दृढोपगूहनं त्यज नवसङ्गमभीरुवल्लभम्।
अरुणकरोद्गम एष वर्त्तते वरतनु संप्रवदन्ति कुक्कुटाः॥

### जलधरमाला म्भौ स्मौ समुद्रवसवः ॥ ४ ॥

यस्य पादे मगण-भगणौ सगण-मगणौ च भवतस्तद्वृत्तं 'जलधरमाला' नाम गाथा। चतुर्भिरष्टाभिश्च यतिः। तत्रोदाहरणम्—

म भ स म

ऽ ऽ ऽ ऽ । । । । ऽ ऽ ऽ ऽ

धत्ते शोभां कुवलयदाम्नः श्यामा
शैलोत्सङ्गे जलधरमाला लीना।
विद्युल्लेखा कनककृतालङ्कारा
क्रीड़ासुप्ता युवतिरिवाङ्के पत्युः॥

৩। যাহার প্রতিপাদে নগণ, জগণদ্বয় ও রগণ এবং পাদান্তে যতি থাকে, সেই বৃত্তের নাম 'বরতনু'।

৪। যাহার প্রতিপাদে মগণ, ভগণ, সগণ ও মগণ থাকে এবং চারি ও আট অক্ষরে যতি হয়, সেই বৃত্তের নাম 'জলধরমালা'।

---

अवशिष्टानि तु प्रस्तारसंख्यया वक्तुमशक्यत्वात् गाथेति सामान्यत उक्तानि। अत्रापि कविभिः प्रयुक्तानां केषाञ्चिद् वृत्तानां वरतन्वित्यादिशशिवदनान्ताः संज्ञाः स्वयमेव कृताः, प्रागुक्तानि तु पूर्वाचार्य्यप्रसिद्धानीति विशेषः। येषान्तु केनापि ग्रन्थकारेण संज्ञा न कृताः, तानि गाथा-संज्ञकानि बोध्यानीति॥

## गौरी नौ रौ ॥ ५ ॥

यस्य पादे नगणौ रगणौ च भवतस्तद् वृत्तं 'गौरी' नाम गाथा। पादान्ते यतिः। तत्रोदाहरणम्—

न न र र न न र र

। । । । । । ऽ । ऽ ऽ । ऽ । । । । । । । ऽ । ऽ ऽ । ऽ

प्रणमति चरणारविन्दद्वयं त्रिभुवननमितस्य गौरीपतेः।
सकृदपि मनसैव यः सेवितः प्रवितरति यथेष्टमष्टौ गुणान्॥

इयमेव गौरी दण्डकात् पूर्वमेकैकरेफवृद्ध्या नामान्तराणि लभते॥

## ललना भ्तौ न्सावि न्द्रियर्षयः ॥ ६ ॥

यस्य पादे भगणतगणौ नगणसगणौ च भवतस्तद् वृत्तं 'ललना'-नाम्नी गाथा। पञ्चभिः सप्तभिश्च यतिः। तत्रोदाहरणम्—

भ त न स भ त न स

ऽ । । ऽ ऽ । । । । । । ऽ ऽ । । ऽ ऽ । । । । । । ऽ

या कुचगुर्वी मृगशिशुनयना पीननितम्बा मदकरिगमना।
किन्नरकण्ठी सुरुचिरदशना सा तव सौख्यं वितरतु ललना॥

अतिजगत्याम्—

## कनकप्रभा स्जौ स्जौ ग् ॥ ७ ॥

यस्य पादे सगणजगणौ पुनः सगणजगणौ गकारश्च, तद् वृत्तं 'कनकप्रभा' नाम गाथा। पादान्ते यतिः।

৫। যাহার প্রতিপাদে নগণদ্বয় ও রগণদ্বয় এবং পাদান্তে যতি থাকে, তাহাকে 'গৌরী' নামক বৃত্ত বলে।

৬। যাহার প্রতিপাদে ভগণ, তগণ, নগণ, সগণ এবং পাঁচ ও সাত অক্ষরে যতি থাকে, তাহাকে 'ললনা' নামক বৃত্ত বলে।

तत्रोदाहरणम्—

स ज स ज ग

। । ऽ । ऽ । । । ऽ । ऽ । ऽ

कनकप्रभा पृथुनितम्बशालिनी
विपुलस्तनी हरिणशावकेक्षणा ।
इयमङ्गना नयनयोः पथि स्थिता
कुरुते न कस्य मदनातुरं मनः ॥

## कुटिलगतिर्नौ तौ ग् स्वरर्त्तवः ॥ ८ ॥

यस्य पादे नगणौ तगणौ गकारश्च भवति, तद् वृत्तं 'कुटिलगति'-र्नाम गाथा । सप्तभिः षड्भिश्च यतिः । तत्रोदाहरणम्—

न न त त ग

। । । । । । ऽ ऽ । ऽ ऽ । ऽ

अधरकिसलये कान्तदन्तक्षते
हरिणशिशुदृशां नृत्यति भ्रूयुगम् ।
ध्रुवमिदमुचितं यद्विपक्षौ सता-
मतिकुटिलमतिः स्यान्महानुत्सवः ॥

शक्कर्य्याम्—

## वरसुन्दरी भ्जौ स्नौ गौ ॥ ९ ॥

यस्य पादे भगणजगणसगणनगणा गकारौ च भवतस्तद् वृत्तं 'वरसुन्दरी' नाम गाथा । पादान्ते यतिः ।

৭। যাহার প্রতিপাদে সগণ, জগণ, পুনর্ব্বার সগণ, জগণ ও একটি গুরু থাকে এবং পাদান্তে যতি হয়, তাহাকে 'কনকপ্রভা' বলে।

৮। যাহার প্রতিপাদে নগণদ্বয়, তগণদ্বয় এবং একটি গুরু এবং সাত ও ছয় অক্ষরে যতি থাকে, তাহাকে 'কুটিলগতি' বলে।

तत्रोदाहरणम्—

भ ज स न ग ग

S I I I S I I I S I I I S S

स्वादुशिशिरोज्ज्वलसुगन्धिजलपूर्णं
वीचिचयचञ्चलविचित्रशतपत्रम् ।
हंसकलकूजितमनोहरतटान्तं
पश्य वरसुन्दरि सरोवरमुदारम् ॥

कुटिला म्भौ नयौ गौ वेदरससमुद्राः ॥ १० ॥

यस्य पादे मगणभगणनगणयगणा गकारौ च भवतस्तद् वृत्तं 'कुटिला' नाम गाथा। चतुर्भिः षड्भिश्चतुर्भिश्च यतिः।

तत्रोदाहरणम्—

म भ न य ग ग

S S S S I I I I I I S S S S

अध्वस्थानां जनयति सुख-मुच्चैः कूजन्
दातूहोऽयं पथि निचुलिनि तोयोपान्ते ।
कर्णाटस्त्री-रतिकुहरित-तुल्यच्छेदै-
र्नादैः कण्ठ-स्खलनकुटिल मन्दावर्त्तैः ॥

अष्टौ—

शैलशिखा भ्रौ न्भौ भ्गौ भूतरसेन्द्रियाः ॥ ११ ॥

৯। যাহার প্রতিপাদে ভগণ, জগণ, সগণ, নগণ এবং দুইটি গুরু থাকে ও পাদান্তে যতি হয়, তাহাকে 'বরসুন্দরী' বলে।

১০। যাহার প্রতিপাদে মগণ, ভগণ, নগণ, যগণ ও দুইটি গুরু এবং চার, ছয় ও চার অক্ষরে যতি থাকে, তাহাকে 'কুটিলা' বলে।

यस्य पादे भगणरगणौ नगणभगणौ भगणो गकारश्च भवति, तद् वृत्तं 'शैलशिखा' नाम गाथा। पञ्चभिः षड्भिः पञ्चभिश्च यतिः। केचित् पादान्ते यतिं पठन्ति। तत्रोदाहरणम्—

भ र न भ भग

S I I S I S I I I S I I S I I S

शैलशिखानिकुञ्जशयितस्य हरेः श्रवणे
जीर्णतृणं करेण निदधाति कपिश्चपलः।
क्षुद्रवधापवादपरिहारविनीतमते-
स्तस्य न तावतैव लघुता द्विपयूथभिदः॥

**वरयुवती भ्रौ य्नौ न्गौ ॥ १२ ॥**

यस्य पादे भगणरगणौ यगणनगणौ नगणो गकारश्च भवति, तद्-वृत्तं 'वरयुवती' नाम गाथा। पादान्ते यतिः। तत्रोदाहरणम्—

भ र य न नग

S I I S I S I S S I I I I I I S

कुञ्जर-कुम्भपीठपीनो-न्नतकुचयुगला
पार्व्वणशर्व्वरीशगर्व्वापहमुखकमला।
पीतनितम्बविम्बसंवाहनशिथिलगति-
र्मुञ्जनराधिराज भूयात्तव वरयुवतिः॥

अत्यष्टौ—

**अतिशायिनी सौ ज्भौ ज्गौ ग् दिक्स्वराः ॥ १३ ॥**

১১। যাহার প্রতিপাদে ভগণ, রগণ, নগণ, ভগণদ্বয় ও একটি গুরু থাকে এবং ৫ম, ১১শ ও ১৬শ অক্ষরে যতি হয়, তাহাকে 'শৈলশিখা' বলে।

১২। যাহার প্রতিপাদে ভগণ, রগণ, যগণ, নগণদ্বয় ও একটি গুরু থাকে এবং পাদান্তে যতি হয়, তাহাকে 'বরযুবতী' নামক গাথা বলে।

यस्य पादे सगणौ जगणभगणौ जगणौ गकारौ च भवतस्तद् वृत्तम् 'अतिशायिनी' नाम गाथा। दशभिः सप्तभिश्च यतिः। तत्रोदाहरणम्—

स स ज भ ज ग ग

। । ऽ । । ऽ । ऽ । ऽ । । । ऽ । ऽ ऽ

इति धौतपुरन्ध्रिमत्सरान् सरसि मज्जनेन
श्रियमात्मवतोऽतिशायिनीमपमलाङ्गभासः।
अवलोक्य तदैव यादवानपरवारिराशेः
शिशिरेतररोचिषाप्यपां ततिषु मङ्क्तुमीषे॥

**अवितथं न्जौ भ्जौ ज्लौ ग्॥ १४॥**

यस्य पादे नगणजगणौ भगणजगणौ जगणलकारौ गकारश्च भवति, तद् वृत्तं 'अवितथं' नाम गाथा। पादान्ते यतिः। तत्रोदाहरणम्—

न ज भ ज ज ल ग

। । । । ऽ । ऽ । । । ऽ । । ऽ । । ऽ

श्रुतिपरिपूतवक्त्रमतिसुन्दरवाग्विभवं
तमखिलजैमिनीयमतसागरपारगतम्।
अवितथवृत्तविप्रजनपूजितपादयुगं
पितरमहं नमामि वहुरूपमुदारमतिम्॥

**वस्विन्द्रियसमुद्राश्चेत् कोकिलकम्॥ १५॥**

১৩। যাহার প্রতিপাদ সগণদ্বয়, জগণ, ভগণ, জগণ ও গুরুবর্ণদ্বয় দ্বারা গ্রথিত, তাহাকে 'অতিশায়িনী' বলে। এই ছন্দে ১০ ও ৭ অক্ষরে যতিনিয়ম।

১৪। যাহার প্রতিপাদে নগণ, জগণ, ভগণ, জগণদ্বয়, একটী লঘু ও একটি গুরু থাকে এবং পাদান্তে যতি হয়, তাহাকে 'অবিতথ' নামক গাথা বলে।

यस्य पादे पूर्व्वोक्ता गणा भवन्ति अष्टाभिः पञ्चभिश्चतुर्भिश्च यतिर्भवति, तद् वृत्तं 'कोकिलकं' नाम गाथा। तत्रोदाहरणम्—

न ज भ ज ज ल ग

। । । । ऽ । ऽ । । । ऽ । । ऽ । । ऽ

नवसहकारपुष्प-मधुनिष्कलकण्ठतया
मधुरतरस्वरेण परिकूजति कोकिलकः।
प्रथमककारविद्व-वचनैर्धनलुब्धमते-
स्तव गमनस्य भङ्गमिव सम्प्रति कर्त्तुमनाः॥

धृतौ—

**विबुधप्रिया रसौ जौ भरौ वसुदिशः॥ १६॥**

यस्य पादे रगणसगणौ जगणौ भगणरगणौ च भवतस्तद् वृत्तं 'विबुधप्रिया' नाम गाथा। अष्टाभिर्दशभिश्च यतिः। तत्रोदाहरणम्—

र स ज ज भ र

ऽ । ऽ । । ऽ । ऽ । । ऽ । ऽ । । ऽ । ऽ

कुन्दकुड्मलकोमल-द्युतिदन्तपङ्क्तिविराजिता
हंसगद्गदवादिनी वनिता भवेद्विबुधप्रिया।
पीनतुङ्गपयोधर-द्वयभारमन्थरगामिनी
नेत्रकान्तिविनिर्ज्जितश्रवणावतंसितकैरवा॥

**नाराचकं नौ रौ रौ॥ १७॥**

यस्य पादे नगणौ रगणाश्चत्वारो भवन्ति, तद् वृत्तं 'नाराचकं' नाम

১৫। যাহার প্রতিপাদে পূর্ব্বোক্ত গণসকল ( ১৪ স্থত্রের ) এবং আট, ত্রয়োদশ ও সতের অক্ষরে যতি থাকে, সেই গাথাকে 'কোকিলক' বলে।

১৬। যাহার প্রতিপাদে রগণ, সগণ, জগণদ্বয়, ভগণ ও রগণ থাকে এবং আট ও আঠার অক্ষরে যতি হয়, তাহাকে 'বিবুধপ্রিয়া বলিয়া জানিবে।

गाथा। दशभिरष्टाभिश्च यतिः। केचित् पादान्ते केवलं यतिमिच्छन्ति। तत्रोदाहरणम्—

न न र र र र

। । । । । । ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ

रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रियां
प्रियसुहृदि विभीषणे संक्रमय्य श्रियं वैरिणः।
रविसुतसहितेन तेनानुयातः स सौमित्रिणा
भुजविजितविमानरत्नाधिरूढः प्रतस्थे पुरीम्॥

**विस्मिता य्मौ न्सौ रौग् रसर्त्तुस्वराः॥ १८॥**

यस्य पादे यगणमगणौ नगणसगणौ रगणौ गकारश्च भवति, तद्वृत्तं 'विस्मिता' नाम गाथा। षड्भिः षड्भिः सप्तभिश्च यतिः।

तत्रोदाहरणम्—

य म न स र र ग

। ऽ ऽ ऽ ऽ ऽ । । । । । ऽ ऽ । ऽ ऽ । ऽ ऽ

श्रिया जुष्टं दिव्यैः सपटहरवै रन्वितं पुष्पवर्षै-
र्वपुष्टश्चैद्यस्य क्षणमृषिगणैः स्तूयमानं निरीय।
प्रकाशेनाकाशे दिनकरकरान् विक्षिपद्विस्मिताक्षै-
र्नरेन्द्रैरौपेन्द्रं वपुरथ विशद्धाम वीक्षाम्बभूवे॥

क्षतौ—

**शशिवदना न्जौ भ्जौ ज् जरौ रुद्रदिशः॥ १९॥**

১৭। যাহার প্রতিপাদে নগণদ্বয়, রগণচতুষ্টয় এবং ১০ম ও ১৮শ অক্ষরে যতি হয়, তাহাকে 'নারাচক' বলে।

১৮। যাহার প্রতিপাদে যগণ, মগণ, নগণ, সগণ, রগণদ্বয় ও দুইটি গুরু থাকে, ছয়, বার এবং উনিশ অক্ষরে যতি হয়, তাহার নাম 'বিস্মিতা'।

यस्य पादे नगणजगणौ भगणो जगणास्त्रयो रगणश्च भवति, तद्‌वृत्तं 'शशिवदना' नाम गाथा। एकादशभिर्दशभिश्च यतिः। पञ्चकावलीति केचित्। तत्रोदाहरणम्—

न ज भ ज ज ज र

। ।।।ऽ।ऽ। । । ऽ ।।ऽ।।ऽ।ऽ।ऽ

तुरगशताकुलस्य परितः परमेकतुरङ्गजन्मनः
प्रमथितभूभृतः प्रतिपथं मथितस्य भृशं महीभृता।
परिचलतो बलानुजबलस्य पुरः सततं धृतश्रिय-
श्चिरविगतश्रियो जलनिधेश्च तदाभवदन्तरं महत्॥

एवमादीनि वृत्तानि कोटिशः प्रस्तारेषु महाकविप्रयोगेषु च दृश्यन्ते। विशेषसंज्ञाभावात्तानि शास्त्रकारेण नामनिर्देशं कृत्वा नोक्तानि, तानि गाथा शब्देन कथ्यन्ते।

इदानीं प्रस्तारादीन् प्रत्ययानुपक्रमते। तत्र गायत्र्यादिप्रस्तारसिद्ध्यर्थमेकाक्षरप्रस्तारपूर्व्वकं द्व्यक्षरप्रस्तारं सूत्रद्वयेनाह*।—

১৯। যাহার প্রতিপাদে নগণ, জগণ, ভগণ, জগণত্রয় ও রগণ এবং একাদশ ও দশম অক্ষরে যতি থাকে, তাহার নাম 'শশিবদনা'। কেহ কেহ উহার নাম 'পঙ্ক্তাবলী' বলিয়া থাকেন।

---

* प्रस्तारो भेदरचना, आदिशब्देन नष्टादीनां परिग्रहः, छन्दसां भेदादिप्रत्यायकत्वात् प्रत्ययाः।

तथाच प्रस्तारोपक्रमे वृत्तरत्नाकरे भट्टकेदारः—

"प्रस्तारो नष्टमुद्दिष्टमेकद्व्यादिलगक्रिया।
संख्यानमध्वयोगश्च षड़ेते प्रत्ययाः स्मृताः॥"

प्रथमं द्वारश्लोकमाह—प्रस्तार इत्यादि। द्वाराणि अमूनि—(१) प्रस्तारः, (२) नष्टम्, (३) उद्दिष्टम्, (४) एकद्व्यादिलगक्रिया, (५) संख्यानम्, (६) अध्वयोगः। एते प्रस्तारादिरूपाः षट् प्रत्ययाः कथिताः।

## द्विकौ ग्लौ ॥ २० ॥

उपरिष्टाद् गकारं लिखित्वाधस्ताल्लकारं विन्यसेदित्येकाक्षरप्रस्तारः। तस्य द्विकत्वाद् द्वौ ग्लौ द्विकौ स्थापयेत्। द्वे आवृत्ती प्रमाणमनयोरिति द्विकौ। "संख्याया अतिशदन्तायाः क"न्निति कन्प्रत्ययः। ततश्च

---

"पादे सर्व्वगुरावाद्याल्लघुं न्यस्य गुरोरधः।
यथोपरि तथा शेषं भूयः कुर्य्यादमुं विधिम् ॥"

प्रस्तारमाह—पादे सर्वगुराविति। सर्व्वगुरौ पादे आद्यात् गुरोरधः लघुं न्यस्य यथा उपरि तथा शेषं कुर्य्यात्। भूयोभूयः अमुं विधिं कुर्य्यात्।

"ऊने दद्याद् गुरूनेव यावत् सर्व्वलघुर्भवेत्।
प्रस्तारोऽयं समाख्यातश्छन्दोविच्छित्तिवेदिभिः ॥"

ऊन इति। ऊने पश्चादूने गुरून् एव दद्यात्, तावत् यावत् सर्वलघुर्भवेत्। प्रस्तार्यते इति प्रस्तारः, वर्णानां विस्तारः न्यासः समाख्यातः कथितः। कैः? छन्दोविच्छित्तिवेदिभिः पण्डितैरिति शेषः।

अथ प्रस्तारस्थापनप्रक्रमः कथ्यते। यथा च प्रथमतः उक्थासंज्ञान्तर्गतस्य एकाक्षरस्य श्रीच्छन्दसः प्रस्तारः विद्यार्थिनां सुखबोधार्थं "लघुं न्यस्य गुरोरधः" तथा "ऊने दद्याद् गुरूनेव" इत्यादिनियमानुसारेण प्रदर्श्यते :—

| | |
|---|---|
| (१) ग ग ग ग। (समवृत्तम्) | (९) ग ग ग ल। |
| (२) ल ग ग ग। | (१०) ल ग ग ल। |
| (३) ग ल ग ग। | (११) ग ल ग ल। (अर्द्धसमवृत्तम्) |
| (४) ल ल ग ग। | (१२) ल ल ग ल। |
| (५) ग ग ल ग। | (१३) ग ग ल ल। |
| (६) ल ग ल ग। (अर्द्धसमवृत्तम्) | (१४) ल ग ल ल। |
| (७) ग ल ल ग। | (१५) ग ल ल ल। |
| (८) ल ल ल ग। | (१६) ल ल ल ल। (समवृत्तम्) |

एकाक्षरच्छन्दसि समवृत्तसंख्या २। समगुणितार्द्धसमवृत्तसंख्या ४। अर्द्धसमगुणित-विषमवृत्तसंख्या १६। अतः आङ्किकरीत्या ४—२ = शुद्धार्द्धसमवृत्तसंख्या। १६—४ = १२ शुद्धविषमसंख्या। २ समवृत्तसंख्या। द्व्यक्षरादिष्वप्येवं बोद्धव्यम्।

**गकारं ततोऽधस्ताल्लकारं लिखित्वा विस्पष्टार्थमधस्तिर्य्यग्रेखां दद्यात्, अधस्ताच्च पूर्व्ववद् गकारलकारौ स्थापयेत्। अत्र किं कर्त्तव्यमित्याह।—**

২০। গ্রন্থকার "দ্বিকৌ গ্লৌ" ইত্যাদি সূত্রচতুষ্টয় দ্বারা প্রস্তার নিরূপণ করিতেছেন। প্রথমতঃ একাক্ষর ছন্দের প্রস্তার-প্রণালী প্রদর্শিত হইতেছে, যথা—একাক্ষর প্রস্তারে উপরিভাগে গকার এবং নিম্নভাগে লকার স্থাপন করিতে হয়। দ্ব্যক্ষর প্রস্তারবিষয়ে প্রথমতঃ এই গকার ও তাহার নিম্নে লকার লিখিয়া, একটি রেখা প্রদান করিতে হয়; পরে ঐ রেখার নিম্নে প্রথমে গকার লিখিয়া, তাহার নিম্নে লকার লিখিবে। তাহার পর যাহা করিতে হইবে, "মিশ্রৌ চ" (২১) সূত্রের অর্থে তাহা প্রদর্শিত হইবে।

---

| | समवृत्तसंख्या | समगुणिताद्धसमसंख्या | अर्द्धसमगुणितविषमसंख्या |
|---|---|---|---|
| द्व्यक्षरच्छन्दसि | ४ | १६ | २५६ |
| त्र्यक्षरच्छन्दसि | ८ | ६४ | ४०८६ |
| चतुरक्षरच्छन्दसि | १६ | २५६ | ६५५३६ |
| पञ्चाक्षरच्छन्दसि | ३२ | १०२४ | १०४८५७६ |
| षडक्षरच्छन्दसि | ६४ | ४०९६ | १६७७७२१६ |

सप्ताक्षरादिष्वप्येवं बोद्धव्यम्।

पूर्व्वोक्तैकाक्षरच्छन्दःकथितनियमवत् आङ्किकहरणनियमानुसारेण समवृत्तशुद्धार्द्धसमवृत्त-शुद्धविषमवृत्तसंख्या प्रदर्श्यते—

| | समवृत्तसंख्या | शुद्धार्द्धसमसंख्या | शुद्धविषमसंख्या |
|---|---|---|---|
| द्व्यक्षरच्छन्दसि | ४ | १२ | २४० |
| त्र्यक्षरच्छन्दसि | ८ | ५६ | ४०३२ |
| चतुरक्षरच्छन्दसि | १६ | २४० | ६५२८० |
| पञ्चाक्षरच्छन्दसि | ३२ | ९९२ | २०४५५५२ |
| षडक्षरच्छन्दसि | ६४ | ४०३२ | २६७७३११२० |

एवं सप्ताक्षरादिषु वेदितव्यम्।

अत्र आङ्किकसङ्केतो यथा—समवृत्तसंख्या × समवृत्तसंख्या = अर्द्धसमवृत्तसंख्या।

अर्द्धसमवृत्तसंख्या + अर्द्धसमवृत्तसंख्या = विषमवृत्तसंख्या। ततः अर्द्धसमवृत्तसंख्या—

## मिश्रौ च ॥ २१ ॥

अनेन द्वितीयाक्षरप्रस्तारं दर्शयति। चकारः पूर्व्वप्रस्तारसमुच्चयार्थः। द्विकौ ग्लौ स्थापयित्वा अनन्तरं द्वितीयाक्षरस्थानेषु मिश्रौ ग्लौ विन्यसेत्। गकारो गकारेण संश्लिष्टो मिश्र उच्यते, लकारश्च लकारेण। मिश्राविति गकारलकाराभ्यां प्रत्येकमभिसम्बध्यते, 'द्वन्द्वात् परो यः श्रूयते' इति न्यायात्। ततश्च प्रथमायामावृत्तौ गकारौ मिश्रौ स्थापयेत्, द्वितीयायां लकाराविति। ततो मध्ये रेखामपनयेत्। एवं चतुःप्रकारो द्व्यक्षरप्रस्तारो भवति। तद् यथा—गौ, ल्गौ, ग्लौ, लाविति।

इदानीं द्व्यक्षरप्रस्तारपूर्व्वकमेकैकाक्षरवृद्ध्या त्र्यक्षरादिप्रस्तारं दर्शयितुमाह—

---

समवृत्तसंख्या = शुद्धार्द्धसमवृत्तसंख्या। विषमवृत्तसंख्या—अर्द्धसमवृत्तसंख्या = शुद्धविषमसंख्या। एतत् तु एकाक्षरच्छन्दसि समार्द्धसमविषमादिसंख्यानिरूपणे द्रष्टव्यम्।

पिङ्गलग्रन्थे तु "द्विकौ ग्लाविति" चतुर्भिः सूत्रैः सूत्रकारः प्रस्ताराख्यं प्रत्ययमाह। एतेषां सूत्राणामर्थ उदाहरणेण विषदीक्रियते :—

एकाक्षरप्रस्तारः।

१। ग।
२। ल।

एकाक्षरप्रस्तारं द्विभागेन उपर्य्युपरि संस्थाप्य तयोरन्तरे रेखां दद्यात्। ततः प्रथमभागे द्वितीयाक्षरस्थाने गकारं द्वितीयभागे द्वितीयाक्षरस्थाने लकारं दद्यात्। ततः गुणनप्रथानुसारेण प्रगुण्य रेखाम् अपनयेत्। एतेन चतुःप्रकारो द्व्यक्षरप्रस्तारो भवति, यथा—

$$\left.\begin{array}{ll} \text{प्रथमभागः} & \begin{pmatrix} \text{ग} \\ \text{ल} \end{pmatrix} + \text{ग} \\ \text{द्वितीयभागः} & \begin{pmatrix} \text{ग} \\ \text{ल} \end{pmatrix} + \text{ल} \end{array}\right\} - \left\{\begin{array}{l} \text{१। ग ग।} \\ \text{२। ल ग।} \\ \text{३। ग ल।} \\ \text{४। ल ल।} \end{array}\right.$$

उक्तनियमेन द्व्यक्षरप्रस्तारं द्विधा संस्थाप्य अष्टप्रकारस्त्र्यक्षरप्रस्तारः, तथा त्र्यक्षरप्रस्तारं द्विधा स्थापयित्वा षोड़शप्रकारश्चतुरक्षरप्रस्तारः, तथा चतुरक्षरप्रस्तारं द्विधा स्थापयित्वा द्वात्रिंशत्प्रकारः पञ्चाक्षरप्रस्तारः, तथा पञ्चाक्षरप्रस्तारं द्विधा संस्थाप्य चतुःषष्टि-प्रकारः षड़क्षरप्रस्तारो लभ्यते। एवं सप्ताक्षरादिप्रस्ताराः ज्ञेयाः।

## पृथग्ला मिश्राः ॥ २२ ॥

द्व्यक्षरप्रस्तारस्य पूर्व्वन्यायेन द्विकं रेखाविभक्तं स्थापयित्वा तृतीयाक्षरस्थानेषु प्रथमावृत्तौ गकारा मिश्रा दातव्याः, द्वितीयावृत्तौ लकारा मिश्राः, ततो मध्ये रेखामपनयेत्। एवं त्रिकप्रस्तारः सिध्यति। पृथगिति विजातीयसंसर्गमाह। तेन प्रथमायामावृत्तौ न लकारप्रवेशः, द्वितीयायां न गकारस्य। एवं त्रिकप्रस्तारं द्विः स्थापयित्वा पृथक् ग्ला मिश्रा दातव्याः। इति चतुरक्षरप्रस्तारः। एवं तत्पूर्व्वकः पञ्चाक्षरप्रस्तारस्तथैव तत्पूर्व्वकः षड़क्षरो गायत्रीसमवृत्तप्रस्तारः; उष्णिगादीनामप्येकैकाक्षरवृद्ध्या एवमेव न्यायः। तत्रेदं सूत्रं त्र्यक्षरात् प्रभृति पुनः पुनरावर्त्तनीयं यावदभिमतः प्रस्तारः॥

২১। পূর্ব্বসূত্রকথিত নিয়মানুসারে গ ও ল দুই ভাগে স্থাপিত হইলে প্রথম ভাগের দ্বিতীয়াক্ষর-স্থানে গ এবং দ্বিতীয় ভাগের দ্বিতীয়াক্ষর-স্থানে ল স্থাপন করিতে হইবে। তদনন্তর প্রথম ভাগের দ্বিতীয়াক্ষরস্থানস্থ গকারের সহিত প্রথম ভাগ মিশ্রিত করিলে গ গ ও ল গ এই দুই প্রকার হইবে এবং দ্বিতীয় ভাগের দ্বিতীয়াক্ষরস্থানস্থ লকারের সহিত দ্বিতীয় ভাগ মিশ্রিত করিলে গ ল ও ল ল এই দুই প্রকার হইবে। সুতরাং দ্ব্যক্ষর প্রস্তার চারি প্রকার হইবে। যথা—গ গ, ল গ, গ ল, ল ল। (এই সকল বিষয় টিপ্পনীতে

| —— | —— | —— | —— |
|---|---|---|---|
| ১ | ২ | ৩ | ৪ |

বিশেষভাবে প্রদর্শিত হইয়াছে)।

২২। পূর্ব্ববৎ দ্ব্যক্ষর প্রস্তার দুইভাগে স্থাপনপূর্ব্বক প্রথম ভাগের তৃতীয়াক্ষর-স্থানে গকার প্রদান করিয়া, তাহার সহিত প্রথম ভাগ মিশ্রিত করিবে; এবং দ্বিতীয় ভাগের তৃতীয়াক্ষর-স্থানে লকার প্রদান করিয়া তাহার সহিত দ্বিতীয়ভাগ মিশ্রিত করিবে। এইরূপে আট প্রকার ত্র্যক্ষর প্রস্তার সিদ্ধ হইয়া থাকে। প্রস্তারবিষয়ে প্রথম ভাগের শেষস্থিত গকার দ্বিতীয় ভাগের মধ্যে প্রবেশ করিবে না এবং দ্বিতীয় ভাগের শেষস্থিত লকারও প্রথমভাগের মধ্যে প্রবেশ করিবে না।—এইরূপ ত্র্যক্ষর প্রস্তার দুই ভাগে স্থাপনপূর্ব্বক, প্রথম ভাগের চতুর্থ অক্ষরস্থানে গকার এবং দ্বিতীয় ভাগের চতুর্থ অক্ষরস্থানে

## দ্বস্বর্স্ত্রিকাঃ ॥ ২৩ ॥

এবং পূর্ব্বোক্তে ত্র্যক্ষরপ্রস্তারে অষ্টৌ ত্রিকা জায়ন্তে, তে চ মকারাদয়ঃ শাস্ত্রাদৌ কথিতা এব। প্রদর্শনার্থস্ত্বেতত্। তেন ষোড়শ চতুষ্কা দ্বাত্রিংশত্ পঞ্চকা ভবন্তি। এবং চতুঃষষ্টির্গায়ত্রীসমবৃত্তানি সর্ব্বগুর্ব্বাদিসর্ব্বলঘ্বন্তানি ভবন্তি। দ্বিগুণোত্তরমুষ্ণিগাদীনামেকৈকাক্ষরাধিক্যাত্। বিস্পষ্টার্থমিদং সূত্রং, প্রস্তারাদেব সংখ্যাপরিচ্ছিত্তেঃ॥

## লর্দ্ধে ॥ ২৪ ॥

যদৈবং বিজিজ্ঞাসেত গায়ত্র্যাং সমবৃত্তং ষষ্ঠং কীদৃশমিতি ? তদা তমেব ষট্সংখ্যাবিশেষমর্দ্ধয়েত্, তস্মিন্নর্দ্ধীকৃতে লঘুরেকো লভ্যতে, তং ভূমৌ বিন্যসেত্। ইদানীমবশিষ্টা ত্রিসংখ্যা বিষমত্বাদর্দ্ধয়িতুং ন শক্যতে। তত্র কিং কর্ত্তব্যমিত্যাহ—

লকার স্থাপন করিয়া মিশ্রিত করিলে ষোল প্রকার চতুরক্ষর প্রস্তার হইবে। এইরূপে চতুরক্ষর প্রস্তার দুই ভাগে স্থাপন করিলে ৩২ প্রকার পঞ্চাক্ষর প্রস্তার হইবে। পঞ্চাক্ষর প্রস্তার দুইভাগে স্থাপন করিলে ৬৪ প্রকার ষড়ক্ষর প্রস্তার হইবে। একাক্ষর প্রস্তার হইতে ষড়ক্ষর পর্য্যন্ত যে প্রস্তার-সংখ্যা প্রদত্ত হইল, ইহা সমবৃত্ত প্রস্তারসংখ্যা। সপ্তাক্ষরাদি সম্বন্ধে প্রস্তারনিয়ম এইরূপই জানিবে।

২৩। পূর্ব্বোক্ত ত্র্যক্ষর প্রস্তারে আটটী "ত্রিকা" (মকারাদিগণ) হইয়া থাকে। এই সকল "গণ" গ্রন্থারম্ভে "ধী শ্রীস্ত্রীম্" ইত্যাদি আটটী সূত্রের দ্বারা সূত্রকার বিবৃত করিয়াছেন। এইরূপে চতুরক্ষর প্রস্তারে সর্ব্বগুর্ব্বাদি সর্ব্বলঘ্বন্ত ১৬টি চতুষ্কা, এবং পঞ্চাক্ষর প্রস্তারে ৩২টী পঞ্চকা, এবং ষড়ক্ষর প্রস্তারে চতুঃষষ্টি সমবৃত্তসংখ্যা হইবে। এক এক অক্ষর বৃদ্ধির সহিত প্রস্তার-সংখ্যা দ্বিগুণরূপে বর্দ্ধিত হইয়া থাকে, এইরূপ সপ্তাক্ষর ছন্দের প্রস্তারানুসারে ১২৮ সমবৃত্তসংখ্যা হইবে। পূর্ব্বোক্ত প্রস্তারনিয়মানুসারে প্রস্তারসংখ্যাজ্ঞান হয় বলিয়া এই সূত্র স্পষ্টার্থ।

২৪। গায়ত্রীচ্ছন্দের সমবৃত্তান্তর্গত ষষ্ঠ ভেদ কীদৃশ ? এইরূপ প্রশ্নের উত্তর লিখিত হইতেছে। প্রথমতঃ ঐ ষষ্ঠ ভেদসংখ্যা ৬কে ২ দ্বারা ভাগ করিবে,

## सैके ग् ॥ २५ ॥

अर्द्धे इत्यनुवर्त्तते। विषमसंख्यायामेकमधिकं निक्षिप्य ततोऽर्द्धयेत्, तत्रैको गकारो लभ्यते, तं पूर्व्वलब्धाल्लकारात् परं स्थापयेत्। ततो द्विसंख्यावशिष्यते, पुनस्तामर्द्धयेत्, ततश्चैकलकारं दद्यात्। ततश्चैकसंख्यावशिष्यते, तत्र तावत् 'सैके गि'ति लक्षणमावर्त्तनीयं यावद् वृत्ताक्षराणि षट् पूर्य्यन्ते। एवं गायत्र्यां समवृत्तषष्ठं सिद्धम्। एवं संख्यान्तरेऽपि योज्यम्। उद्दिष्टवृत्तस्य संख्यापरिज्ञानार्थमाह—

## प्रतिलोमगु[ग]णं द्विर्लाद्यम् ॥ २६ ॥

यस्य वृत्तस्य संख्यां जिज्ञासेत तद् भूमौ प्रस्तारयेत्। ततस्तस्यान्ते यो लकारः सजातीयापेक्षया तमादौ कृत्वा प्रातिलोम्येन द्विरावर्त्तयेत। तत्र निराश्रयाया [निराकाराया] आवृत्तेरसम्भवात् प्रथमातिक्रमे कारणाभावादेकसंख्या लभ्यते। ततश्चैकसंख्याङ्कमन्त्यलकारस्याधस्तात् स्थापयित्वा द्विगुणयेत्, ततस्तस्मादपनीय तत् पूर्व्वस्य वर्णस्याधस्तान्निधाय पुनर्द्विगुणयेत्। पुनस्तदपि तत्पूर्व्वस्य, एवं यावद्-

পরে ২ দ্বারা অর্দ্ধীকৃত হইলে লকার স্থাপন করিবে। এখন দেখিতেছি—অবশিষ্ট সংখ্যা যাহা রহিল, তাহা ৩ অর্থাৎ বিষম সংখ্যা ;—২ দ্বারা ভাজ্য নহে। সুতরাং কি কর্ত্তব্য ? ২৫ সূত্রে তাহাই প্রকাশ করা হইতেছে।

২৫। বিষম সংখ্যাতে এক যোগ করিয়া, তাহাকে দুই ভাগ করিবে ; পরে পূর্ব্ব সূত্রে লব্ধ লকারের পর গকার স্থাপন করিবে। তাহার পর অবশিষ্ট ২ সংখ্যাকে দুই ভাগ করিয়া লকার স্থাপন করিবে। এখন অবশিষ্ট ১ সংখ্যার সহিত ১ যোগ করিয়া তাহাকে দুই ভাগে বিভক্ত করিয়া, গকার স্থাপন করিবে। এইরূপে যতক্ষণ পর্য্যন্ত ষড়ক্ষর পূর্ণ না হয়, ততক্ষণ অবশিষ্ট বিষম সংখ্যা ১এর সহিত ১ যোগ করিয়া তাহাকে দুই ভাগে বিভক্ত করিয়া, গকার স্থাপন করিবে। সুতরাং ষড়ক্ষরচ্ছন্দের ষষ্ঠভেদ "ল গ ল" "গ গ গ" হইবে। অন্যত্রও এইরূপ জানিবে।

वृत्ताक्षराणि प्रातिलोम्येन समाप्यन्ते। तत्र याः संख्या निष्पद्यन्ते तावतिथं 'तद्वृत्त'मिति। तत्र विशेषमाह—

ततोऽप्येकं जह्यात् ॥ २७ ॥

पूर्व्वोक्ते कर्म्मणि क्रियमाणे यदि सा संख्या गकारस्थानमापद्यते तदा तां द्विगुणयित्वा ततः संख्यासमुदायादेकं त्यजेत्, ततः पूर्वोक्तं कर्म्म कुर्य्यात्। ततः परिपूर्णत्वात्तद्वृत्तसंख्या सिध्यति। प्रस्ताराद्विना वृत्तसंख्यापरिज्ञानमाह—

২৬। যে বৃত্তের সংখ্যা জিজ্ঞাসা করিবে, সেই বৃত্তের গণ স্থাপন করিতে হইবে। যথা—ষড়ক্ষর গায়ত্রীচ্ছন্দের "তনুমধ্যা" নামক বৃত্ত কত সংখ্যক ভেদের অন্তর্গত?—এইরূপ প্রশ্নে প্রথমতঃ "তনুমধ্যা তৌ" সূত্রানুসারে তগণ যগণ পাওয়া যায়—গণযুক্ত লক্ষণ যথা –

ত য

S S I I S S

গ গ ল ল গ গ

৭ ৪ ২ ১

এখন তৃতীয় স্থানস্থিত লকারকে অপেক্ষা করিয়া চতুর্থ স্থানস্থিত লকার অন্ত্য লকার, এই অন্ত্য লকারের নিম্নে ১ স্থাপন করিবে, পরে ঐ সংখ্যাকে দ্বিগুণ করিয়া প্রতিলোমক্রমে তৎপূর্ব্ব লকারের নিম্নে স্থাপন করিবে, পরে ঐ ২ সংখ্যাকে দ্বিগুণ করিয়া তৎপূর্ব্বে গকারের নিম্নে স্থাপন করিবে, পরে ঐ ৪ সংখ্যাকে দ্বিগুণ করিয়া তাহা হইতে "একং জহ্যাৎ" সূত্রানুসারে ১ বাদ দিয়া তৎপূর্ব্ব গকারের নিম্নে ৭ স্থাপন করিবে, পরে সমুদয় সংখ্যা অর্থাৎ ১+২+৪ +৭ যোগ করিয়া যে ১৪ সংখ্যা হইবে, তাহা হইতেও "একং জহ্যাৎ" সূত্রানুসারে ১ বাদ দিতে হইবে; সুতরাং গ গ ল ল গ গ পাওয়া গেল। ইহাই ১৩ সংখ্যক ভেদ হইবে। এইরূপ সর্ব্বত্র।

২৭। এই সূত্রের ভাবার্থ পূর্ব্বসূত্রে বলা হইয়াছে, তথাপি বিদ্যার্থিবৃন্দের সুখবোধহেতু স্পষ্টরূপ বলা হইতেছে। পূর্ব্বসূত্রানুসারে অন্ত্য-

## द्विरर्द्धे ॥ २८ ॥

अपनीते इत्यध्याहारः। यदा जिज्ञासेत षडक्षरे च्छन्दसि कति वृत्तानि भवन्तीति? तदा तां छन्दोऽक्षरसंख्यां भूमौ स्थापयित्वा ततोऽर्द्धमपनयेत्। तस्मिन्नपनीते द्वौ लभ्येते। ततस्तां द्विसंख्यां भूमौ पृथक् प्रस्तारयेत्। ततः शेषास्त्रयोऽक्षरसंख्यायां भवन्ति। तेषामर्द्ध-यितुमशक्यत्वात् किं कर्त्तव्यमित्याह—

## रूपे शून्यम् ॥ २९ ॥

विषमसंख्यातो रूपमपनयेत्, तस्मिन्नपनीते शून्यं लभ्यते। तत् पूर्व्वलब्धाया द्विसंख्याया अधस्तात् स्थापयेत्; ततो द्विसंख्या अवशिष्यते, ततोऽर्द्धेऽपनीते पुनर्द्विसंख्या लभ्यते, तां शून्याधस्तात् स्थापयेत्, ततो रूपे शून्यं लभ्यते, तद्द्विसंख्याया अधस्तात् स्थापयेत्। ततः किं कर्त्तव्य-मित्याह—

লকারের অধঃস্থান হইতে শেষ গকারের অধঃস্থান পর্য্যন্ত প্রতিলোমক্রমে ১ আদি সংখ্যা দ্বিগুণ করিয়া স্থাপন করিবে। পরে সমস্ত সংখ্যা যোগ দিয়া তাহা হইতে ১ বাদ দিলেই বৃত্তসংখ্যা পাওয়া যাইবে।

২৮।২৯। ষড়ক্ষর ছন্দে সমবৃত্তসংখ্যা কত হইবে? এইরূপ প্রশ্নের উত্তর ২৮।২৯।৩০।৩১। সূত্র দ্বারা গ্রন্থকার সমাধান করিতেছেন। ষড়ক্ষরছন্দের অঙ্কসংখ্যা ৬, ঐ ৬কে দুই ভাগে বিভক্ত করিয়া, "দ্বিরর্দ্ধে" এই সূত্রানুসারে প্রথমার্দ্ধস্থানে ২ সংখ্যা ধরিয়া লইবে। ঐ ২ সংখ্যাকে পৃথক্ ভাবে রাখিবে। অপর যে অর্দ্ধ ছিল, তাহার অঙ্কসংখ্যা ৩, উহা বিষমসংখ্যা; সুতরাং ভাগযোগ্য নহে। এখন ঐ ৩ সংখ্যা-সম্বন্ধে কি করিতে হইবে—২৯ সূত্র দ্বারা তাহারই ব্যবস্থা হইতেছে। বিষম সংখ্যা হইতে রূপ অর্থাৎ এক অপনয়ন করিবে, অর্থাৎ বিয়োগ করিবে। এক বিয়োগ করিলেই "রূপে শূন্যম্" সূত্রানুসারে শূন্য ধরিয়া লইতে হইবে। এই শূন্যকে পূর্ব্বসূত্রলব্ধ ২ সংখ্যার নিম্নে স্থাপন করিবে। যে বিষম সংখ্যা ৩ হইতে "রূপে শূন্যম্" সূত্রানুসারে ১ বাদ দিয়া শূন্য ধরা হইয়াছিল,—সেই তিন সংখ্যার ২ অবশিষ্ট আছে। এই ২ সংখ্যাকে দুই ভাগে বিভক্ত করিয়া প্রথম ভাগের মস্থানে "দ্বিরর্দ্ধে" সূত্রানুসারে ২ লাভ হইল।

## द्विः शून्ये ॥ ३० ॥

शून्यस्थाने द्विरावृत्तिं कुर्य्यात्। तत्र निराकाराया आवृत्ते-रसम्भवात् प्रथमातिक्रमे कारणाभावादेकसंख्या लभ्यते, तां शून्यस्थानं स्थापयित्वा द्विगुणयेत्। ततो द्वौ भवतः। तस्योपरिष्टादर्द्धस्थानं द्विसंख्याङ्कम्, तदपनीय तस्य स्थाने तं द्विसंख्याङ्कं स्थापयेत्॥ अन-न्तरमिदं कर्त्तव्यमित्याह—

## तावदर्द्धे तद्गुणितम् ॥ ३१ ॥

यदर्द्धस्थाने स्थितं संख्याजातं तत्तावद् गुणितं कुर्य्यात्। एतदुक्तं भवति,—स्वसंख्ययैव गुणयितव्यमिति। ततो द्वौ द्वाभ्यां गुणितौ चत्वारो भवन्ति। तेषामुपरिष्टाच्छून्यस्थानं,—तत्र तानारोपयेत्। अनन्तरं द्विः शून्य इति द्विगुणिता अष्टौ भवन्ति, तानप्यर्द्धस्थाने निधाय तावद् गुणितान् कुर्य्यात्। ततोऽष्टावष्टाभिर्गुणिताश्चतुःषष्टि-र्भवन्ति गायत्रीसमवृत्तानि। अनेनैव न्यायेनाष्टाविंशत्यधिकशत-मुष्णिहः। षट्पञ्चाशदधिके द्वे शते अनुष्टुभः। द्वादशोत्तराणि पञ्च-शतानि बृहत्याः। चतुर्व्विंशत्यधिकं सहस्रं पङ्क्तेः। अष्टचत्वारिंशद-धिके द्वे सहस्रे त्रिष्टुभः। षण्णवत्यधिकानि चत्वारि सहस्राणि जगत्याः। एवमतिच्छन्दसां गायत्र्यादिक्रत्यादीनाञ्च द्रष्टव्यम्॥

এই দুইকে ২ সংখ্যার নিম্নে যে শূন্য স্থাপন করা হইয়াছিল,—সেই শূন্যের নিম্নে স্থাপন করিতে হইবে। এখন অবশিষ্ট আছে ১ এই ১ বিষম সংখ্যা; সুতরাং "রূপে শূন্যম্" সূত্রানুসারে ১ বাদ দেওয়ায় শূন্যলাভ লইল। এই শূন্য সর্ব্বনিম্নে স্থাপন করিতে হইবে। অতঃপর যাহা কর্ত্তব্য, ৩০ ও ৩১ সূত্রের অনুবাদে তাহা প্রদর্শিত হইতেছে।

৩০।৩১। শূন্যের গুণ হয় না বলিয়া তাহার স্থানে ল ধরিয়া লইতে হইবে। সর্ব্বাধঃস্থিত শূন্য-স্থানে ১ সংখ্যা স্থাপন করিয়া,—"দ্বিঃ শূন্যে" এই সূত্রানুসারে তাহাকে ২ দ্বারা গুণ করিবে, অর্থাৎ ১×২=২। এই ২ সংখ্যাকে তদূর্দ্ধস্থানে স্থাপন করিয়া—"তাবদর্দ্ধে তদ্গুণিতং" এই সূত্রানু-

## द्विर्द्व्यूनं तदन्तानाम् ॥ ३२ ॥

**गायत्र्यादिवृत्तसंख्याजातं द्विगुणीकृत्य द्वाभ्यामूनं कुर्य्यात्, तत् तदन्तानां परिमाणं भवति, यस्य छन्दसः संख्या द्विगुणिता तत्पर्य्यन्तानां पूर्व्वेषामेकाक्षरप्रभृतीनां वृत्तसंख्या भवतीत्यर्थः ॥**

সারে ২ সংখ্যা দ্বারা গুণ করিবে, অর্থাৎ ২×২=৪। এই ৪ সংখ্যাকে তদুপরিস্থ শূন্যস্থানে স্থাপন করিয়া "দ্বিঃ শূন্যে" এই সূত্রানুসারে পুনর্ব্বার ২ দ্বারা গুণ করিবে, অর্থাৎ ৪×২=৮। এই ৮ সংখ্যাকে তদুপরিস্থিত অর্দ্ধস্থানে স্থাপন করিয়া ৮ সংখ্যা দ্বারা গুণ করিবে, অর্থাৎ ৮×৮=৬৪। এইরূপে উষ্ণিক্-চ্ছন্দের ১২৮, অনুষ্টুভের ২৫৬, বৃহতীর ৫১২, পঙ্ক্তির ১২০৪, ত্রিষ্টুভের ২০৪৮, জগতীর ৪০৯৬ সমবৃত্ত সংখ্যা হইবে। অন্যত্রও এইরূপে নির্ণয় করিতে হইবে।

---

এই স্থাপন-প্রকার অর্থের সহিত মিলাইবে।

২৮ ও ২৯ সূত্রের স্থাপন—প্রকার।

অর্দ্ধস্থান————২
শূন্যস্থান————০
অর্দ্ধস্থান————২
শূন্যস্থান————০

৩০ ও ৩১ সূত্রের স্থাপন—প্রকার।

অর্দ্ধস্থান————২, ৮×৮=৬৪
শূন্যস্থান————০ ৪×২=৮
অর্দ্ধস্থান————২, ২×২=৪
শূন্যস্থান————০, ১×২=২

৩২। একাক্ষরাদি ষড়ক্ষর পর্য্যন্ত সমবৃত্ত সংখ্যার যোগফল কত? এই প্রশ্নের উত্তর—

গায়ত্র্যাদি সমবৃত্তসংখ্যাজাত অঙ্ককে দ্বিগুণ করিয়া তাহা হইতে ২ বাদ দিতে হইবে। এইরূপেই প্রশ্নের উত্তর হইয়া থাকে। যে ছন্দের সংখ্যা দ্বিগুণ করিয়া তাহা হইতে ২ বাদ দিবে, একাক্ষর হইতে আরম্ভ করিয়া সেই ছন্দঃ পর্য্যন্ত তত সংখ্যা হইবে। যথা ষড়ক্ষর বৃত্তসংখ্যা ৬৪×২=১২৮−২=১২৬ একাক্ষর হইতে ষড়ক্ষর পর্য্যন্ত সমবৃত্ত-সংখ্যা এইরূপ সর্ব্বত্র।

## परेण पूर्णम् ॥ ३३ ॥

तदेतच्छन्दोवृत्तसंख्याजातं, द्विगुणितं पूर्णमेव स्थापयितव्यं न ह्रूनम्। परे छन्दसि जिज्ञासिते तत् संख्याजातं द्विगुणितं परस्य छन्दसो वृत्तानां संख्या भवति। तद् यथा—चतुःषष्टिर्गायत्रीसमवृत्तानां संख्या द्विगुणिता सती परस्या उष्णिहः समवृत्तसंख्याष्टाविंशत्यधिकशतं भवति ॥

## परे पूर्णमिति ॥ ३४ ॥

अनेन एकद्व्यादिलघुक्रियासिद्ध्यर्थं यावदभिमतं प्रथमप्रस्तारवत् मेरुप्रस्तारं दर्शयति। उपरिष्टादेकं चतुरस्रकोष्ठं लिखित्वा तस्याऽधस्तादुभयतोऽर्द्धनिष्क्रान्तं कोष्ठकद्वयं लिखेत्, तस्याप्यधस्तात्त्रयं, तस्याप्यधस्ताच्चतुष्टयमेवं यावदभिमतं स्थानमिति मेरुप्रस्तारः।

### वर्णमेरुः।

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| | १ | | | | | | | | | |
| एकाक्षरस्य प्रस्तारः ··· | १ | १ | | | | | | | | ··· २ |
| द्व्यक्षरस्य ,, | १ | २ | १ | | | | | | | ··· ४ |
| त्र्यक्षरस्य ,, | १ | ३ | ३ | १ | | | | | | ··· ८ |
| चतुरक्षरस्य ,, | १ | ४ | ६ | ४ | १ | | | | | ···१६ |
| पञ्चाक्षरस्य ,, | १ | ५ | १० | १० | ५ | १ | | | | ३२ |
| षडक्षरस्य ,, | १ | ६ | १५ | २० | २५ | ६ | १ | | | ७४ |
| सप्ताक्षरस्य | १ | ७ | २१ | ३५ | ३५ | २१ | ७ | १ | | १२८ |
| अष्टाक्षरस्य | १ | ८ | २८ | ५६ | ७० | ५६ | २८ | ८ | १ | २५६ |

৩৩। উষ্ণিক্ ছন্দের সমবৃত্তসংখ্যা কত? এইরূপ প্রশ্নের উত্তর।—তৎপূর্ব্ববর্ত্তী ষড়ক্ষর গায়ত্রীছন্দের সমবৃত্ত সংখ্যাকে ২ দ্বারা গুণ করিতে হইবে।

तस्य प्रथमे कोष्ठे एकसंख्यां व्यवस्थाप्य लक्षणमिदं प्रवर्त्तयेत्। तत्र द्विकोष्ठायां पङ्क्तावुभयोः कोष्ठयोरेकैकमङ्कं दद्यात्। ततस्तृतीयायां पङ्क्तौ पर्य्यन्तकोष्ठयोरेकैकमङ्कं दद्यात्। मध्यमकोष्ठे तूपरिकोष्ठद्वयाङ्कमेकीकृत्य पूर्णं निवेशयेदिति पूर्णशब्दार्थः। चतुर्थ्यां पङ्क्तावपि पर्य्यन्तकोष्ठयोरेकैकमङ्कं स्थापयेत्। मध्यमकोष्ठयोस्तु परकोष्ठद्वयाङ्कमेकीकृत्य पूर्णं त्रिसंख्यारूपं स्थापयेत्। उत्तरत्राप्येवमेव न्यासः।

तत्र द्विकोष्ठायां पङ्क्तावेकाक्षरस्य प्रस्तारः। तत्रैकं सर्व्वगुरु एकं सर्व्वलघु वृत्तं भवति। तृतीयायां पङ्क्तौ द्व्यक्षरस्य प्रस्तारः। तत्रैकं सर्व्वगुरु द्वे एकलघुनी एकं सर्व्वलघ्विति कोष्ठक्रमेण वृत्तानि भवन्ति। चतुर्थ्यां पङ्क्तौ त्र्यक्षरस्य प्रस्तारः। तत्रैकं

এই স্থলে পূর্ব্ববৎ ২ বাদ দিতে হইবে না। যথা—গায়ত্রীচ্ছন্দের সমবৃত্ত-সংখ্যা ৬৪। এই ৬৪কে ২ দ্বারা গুণ করিলে ১২৮ উষ্ণিক্‌ছন্দের সমবৃত্তসংখ্যা হইবে। এরূপ সর্ব্বত্র।

৩৪। সম্প্রতি সূত্রকার—"একদ্ব্যাদিলঘুক্রিয়াসিদ্ধ্যর্থ" প্রথম প্রস্তারবৎ "মেরুপ্রস্তার" প্রদর্শন করিতেছেন। সর্ব্বোপরি চতুরস্র কোষ্ঠ লিখিয়া তাহার নিম্নে উভয় পার্শ্বে অর্দ্ধনিষ্ক্রান্ত কোষ্ঠদ্বয় লিখিবে। তাহার নিম্নে তিনটি প্রকোষ্ঠ, তাহার নিম্নে চারিটি প্রকোষ্ঠ, এইরূপে ইচ্ছানুরূপ মেরু-প্রস্তারের জন্য প্রকোষ্ঠ রচনা করিবে। প্রথম প্রকোষ্ঠে ১ সংখ্যা স্থাপন করিবে। দ্বিতীয় পঙ্‌ক্তির প্রকোষ্ঠদ্বয়ে দুইটি ১ সংখ্যা স্থাপন করিবে। তৃতীয় পঙ্‌ক্তির প্রকোষ্ঠে এবং প্রান্তস্থিত কোষ্ঠদ্বয়ে দুইটি এক সংখ্যা স্থাপন করিয়া মধ্যম প্রকোষ্ঠে দ্বিতীয় কোষ্ঠদ্বয়ের অঙ্ক যোগ করিয়া বসাইবে। চতুর্থ পঙ্‌ক্তির প্রকোষ্ঠচতুষ্টয়ের প্রান্তস্থিত কোষ্ঠদ্বয়ে দুইটি ১ সংখ্যা স্থাপন করিবে। মধ্যম প্রকোষ্ঠদ্বয়ে উপরিস্থ প্রকোষ্ঠদ্বয়ের অঙ্ক যোগ করিয়া বসাইবে। উত্তরত্রও এইরূপ অঙ্কবিন্যাস করিবে। অঙ্কবিন্যাস-প্রণালী বর্ণমেরুস্থাপন-প্রণালীতে দেখিতে পাইবে। বর্ণমেরুর দ্বিতীয় পঙ্‌ক্তিতে একাক্ষর প্রস্তার প্রদর্শিত হইয়াছে। একটি সর্ব্বগুরু, এবং একটি সর্ব্বলঘু হইবে। তৃতীয় পঙ্‌ক্তিতে দ্ব্যক্ষর প্রস্তার প্রদর্শিত হইয়াছে। একটি সর্ব্বগুরু, একটি সর্ব্বলঘু এবং দুইটি দ্বিলঘু

सर्व्वगुरु त्रीणि एकलघूनि त्रीणि द्विलघूनि एकं सर्व्वलघु। तथा पञ्चमादिपङ्क्तावपि सर्व्वगुर्व्वादिसर्व्वलघ्वन्तमेकद्व्यादि लघु द्रष्टव्यमिति। षष्ठप्रत्ययोऽध्वपरिच्छित्तिरित्येके*। साऽल्पत्वात् पुरुषेच्छानुविधायित्वेनानियतत्वाच्च, नोक्तः † एवं प्रत्ययसमासः समाप्तः॥

पिङ्गलाचार्य्यरचिते छन्दःशास्त्रे हलायुधः।
मृतसञ्जीवनीं नाम वृत्तिं निर्म्मितवानिमाम्॥

इति श्रीभट्टहलायुधकृतायां छन्दोवृत्तौ मृतसञ्जीवनीनाम्न्यामष्टमोऽध्यायः समाप्तः॥ ८

समाप्तश्चायं ग्रन्थः।

ओं तत्सत्।

বিশিষ্ট হইবে। চতুর্থ পঙ্‌ক্তিতে ত্র্যক্ষর প্রস্তার প্রদর্শিত হইয়াছে। একটি সর্ব্বগুরু, একটি সর্ব্বলঘু, তিনটি একলঘু ও তিনটি দ্বিলঘু হইবে। এইরূপ পঞ্চমাদি পঙ্‌ক্তিতে সর্ব্বগুরু সর্ব্বলঘ্বন্ত একদ্ব্যাদিলঘু পূর্ব্বোক্ত প্রস্তারানুসারে দেখিয়া লইবে। প্রস্তারান্তর্গত ষষ্ঠপ্রত্যয়ের নাম অধ্বযোগ। অপ্রয়োজনীয়তা-বিধায় সূত্রকার কিংবা বৃত্তিকার কেহই এতৎসম্বন্ধে কিছুই প্রদর্শন করেন নাই।

---

* तथाच भट्टकेदारः—संख्यैव द्विगुणैकोना सद्भिरध्वा प्रकीर्त्तितः। वृत्तस्याङ्गुलिकीं व्याप्तिमधः कुर्य्यादथाङ्गुलीम्॥ इत्यध्वलक्षणम्।

† सूत्रकारेण परित्यक्तमपि मात्राणां प्रस्तारादिकं परमोपयोगितया संगृह्य प्रदर्श्यते—

अथ मात्राप्रस्तारः।

तत्र प्रथमपङ्क्तौ स्याद् गुरुपादस्तु पूर्व्ववत्।
द्वितीयपङ्क्तौ प्रथमादधो लेख्यो लघुर्गुरुः॥
यथोपरि तथा शेषो मूलस्थाने लघुं न्यसेत्।
तृतीयादिषु पङ्क्तिष्वप्येवमेव गुरोरधः॥
लघुं न्यस्यावशिष्टन्तु पूर्व्ववत् परिकीर्त्तितम्॥
न्यूने मात्रात्रयं देयं तस्मिन्नादौ गुरुर्द्वयोः।
कलयोः स्यात्तथा पूर्वं लघुर्द्वयोर्भवेत्ततः॥
चतुर्थपङ्क्तावप्येवं पञ्चम्यान्तु गुरोरधः।

लघुद्वयं लिखेत् पूर्वं शिष्टन्तूपरिवद्भवेत् ॥
एवं सर्वत्र विज्ञेयः कलाप्रस्तार उत्तमः ।
तेन द्विगुरुपादस्य पञ्च भेदा भवन्त्यमी ।
सर्व्वान्तमध्यादिगुरुश्चतुर्लघुगणाः स्मृताः ॥

अथ मात्रानष्टम् ।

संख्याप्येह पृथङ् मात्रास्तत्र चाङ्कान् समालिखेत् ।
एकद्व्यङ्कतृतीयाङ्कानाद्यमात्रात्रये क्रमात् ॥
ततः पूर्व्वद्वयोर्न्मिश्रानन्ते पृष्टाङ्कलोपनम् ।
पूर्व्वपूर्व्वतरोऽस्यापि लोपः सम्भवतो भवेत् ॥
यस्य यस्य भवेल्लोपस्तदधो गुरुता भवेत् ।
परमात्रात्रयेऽत्यन्तमात्रानष्टं वदेत् सुधीः ॥

यथा चतुष्कलप्रस्तारे द्वितीयः कीदृग् भवेदिति प्रश्ने चतस्रः कलाः पृथक् स्थाप्यास्तासु प्रथमायामेकोऽङ्को देयो द्वितीयायां द्व्यङ्कः । एकाऽद्व्यङ्कावेकीकृत्य जातस्त्र्यङ्कस्तृतीयायां द्व्यङ्कत्र्यङ्कावेकीकृत्य जातः पञ्चाङ्कश्चतुर्थ्याम् ।

१ २ ३ ५

( । । । । ) पृष्टाङ्कमन्तिमकलोपर्य्यङ्के लोपयेत्, तत्रावशिष्टे पूर्वपूर्वाङ्कं यथासम्भवं लोपयेत् । यस्याङ्कस्य लोपस्तदधस्तनमात्रा परमात्रया सहितः गुरुमायाति । प्रकृतद्वितीयभेदप्रश्ने अन्तिमपञ्चमेऽङ्के पृष्टं द्व्यङ्कं विलोप्यावशिष्टं त्र्यङ्को पूर्व्वत्र्यङ्कं विलोपयेत् । एवञ्च तृतीयचतुर्थकलोपर्य्यङ्कयोर्लुप्तत्वात् तदधस्तन्मात्रयोर्गुरुत्वं सम्भवतीत्यन्तगुरुः (॥ऽ) द्वितीयो भेदः

अथ मात्रोद्दिष्टम् ।

उद्दिष्टे नष्टवन्नस्यान्मात्राणां स्थापनं पृथक् ।
उद्दिष्टवृत्तप्रस्तारं लिखित्वोपरि विन्यसेत् ॥
कलयोराद्ययोरेकद्व्यङ्कावन्यकलासु च ।
पूर्वपूर्वद्वयोर्न्मिश्रानङ्कानथ गुरूपरि ।
अङ्कं प्रथममात्राया अपरस्यास्तधो गुरोः ॥
असंकरार्थमङ्कानामेकीकृत्य गुरूर्द्ध्वगात् ।
अङ्कानप्रणयेदन्त्ये शिष्टन्तूद्दिष्टमुच्यते ॥

चतुष्कलाप्रस्तारे आदिगुरुः कस्मिन् स्थानेऽस्तीति प्रश्ने न्यासः ( १ २ ३ ५ )। अत्र गुरुशिरस्थ एकाङ्कोऽन्तिमकलोपरिस्थे पञ्चाङ्केऽपनेयः तथा सति तत्रावशिष्टाश्चत्वार इति चतुर्थमादिगुरु—( ऽ । । ) स्थानं प्रकटं भवति । एवं सर्वत्र ज्ञेयम् ॥

अथ मात्रामेरुः।

एकाधिककोष्ठानां द्वे द्वे पङ्क्ती समे कार्य्ये। तासामन्तिमकोष्ठेष्वेकाङ्कं पूर्व्वभागे तु एकाङ्कमयुक्पङ्क्तेः समपङ्क्तौ पूर्व्वयुग्माङ्कं दद्यादादिमकोष्ठे यावत् पङ्क्तिप्रवृत्तिः स्यात्, आद्याङ्केन तदीयैः शीर्षाङ्कैर्व्वामभागस्थैः उपरिस्थितेन कोष्ठं विषमायां प्रेरयेत्, पङ्क्तौ समपङ्क्तौ कोष्ठानां पूरणमाद्याङ्कमपहाय। उपरिस्थाङ्कैस्तदुपरिसंस्थैर्वामस्थितैरङ्कैर्मात्रामेरुरयं प्रोक्तः पूर्व्वोक्तफलभागिति। अत्रैककलस्य भेदाभावान्मेरुर्नास्ति द्विकलमारभ्य मेरुः कार्य्यः। तत्र द्विकलत्रिकलयोर्द्विकोष्ठात्मको मेरुः, प्रथमो द्विकलमेरुस्तस्य विषमकोष्ठत्वादाद्यन्तयोरेकैकाङ्कं द्वितीयस्य समकोष्ठत्वात् अन्तिमकोष्ठे एकाङ्कं प्रथमकोष्ठे शिरःस्थितकोष्ठद्वयाङ्कमेकीकृत्य तेन द्व्यङ्केन पूरणम्, एवं सर्व्वत्र विषमेषु एकत्रिपञ्चसप्तादिषु आद्यन्तयोरेकाङ्कं समेषु द्विचतुःषडष्टादिषु अन्तकोष्ठे एकाङ्कं शिष्टेषु शिरःस्थितकोष्ठद्वयाङ्कमेकीकृत्य तेन पूरणम्।

अथ चक्रम्।

। १ । १ ।

। २ । १ ।

। १ । ३ । १ ।

। ३ । ४ । १ ।

। १ । ६ । ५ ।

। ४ । १० । १ ।

# पिङ्गलच्छन्दः-सूत्र

## भाषाटीका

### प्रथम अध्याय

१। प्रत्येक छन्दःशास्त्रवनानेवाले पण्डित लोग ही सङ्केतसे ही छन्दोंका लक्षण प्रकट किया करते हैं। पिङ्गलसूत्रमें भी यह नियम नहीं पलटा गया है। इसमें म, य, र, स, त, ज, भ, न, ग, और ल, इन दश अक्षरोंसे समस्त छन्दोंका संकेत दिखलाया गया है। ये दश अक्षर ही समस्त छन्दःशिक्षाकी जड़ हैं। तीन तीन अक्षर एकत्र रखकर ही छन्दः ठीक करने पड़ते हैं। इनको गण कहते हैं। छन्दः शास्त्रमें पूर्व्वोक्त मसे त तक कुल आठ गण हैं। ग और ल द्वारा केवल एक एकका परिचय होता है, तीन अक्षरोंका नहीं। लगातार तीन अक्षर गुरु होनेसे वे क्या संज्ञा कहयति हैं—इसी उद्देश्यसे ग्रन्थकार कहते हैं कि क्रमसे तीन अक्षर गुरु होनेपर उनकी "म" संज्ञा जानो। अर्थात् जहांपर म देखोगे वहाँपर तीन अक्षर गुरु वर्ण जानने होंगे। इस सूत्रमें 'धी' 'श्री' "स्त्री" तीनों अक्षर गुरु हुए। प्रथम सूत्रमें अष्टम सूत्र पर्य्यन्त प्रत्येक सूत्रके ही प्रथम तीन तीन अक्षर स्व स्व गुरुत्व और लघुत्व अनुसारसे तीन तीन गुरु और लघुवर्णके ज्ञापक हैं। अन्यत्र भी इसी प्रकार जानना चाहिये। धी प्रभृति द्वारा क्यों निर्देश किया गया सो आगे (१५वे सूत्रमें) वताया जायगा। "विद्युन्माला मौ गौ" इत्यादि सूत्रमें 'म' संज्ञाका प्रयोजन होता है।

इस ग्रन्थमें गुरुवर्णका चिह्न (ऽ) एवं लघुवर्णका चिह्न (।) इस प्रकार दिया जायगा।

२। जिस तीन वर्णोंके आदिवर्ण लघु है, उन तीन वर्णोंके नाम 'य'। अर्थात् जिस तीन अक्षरोंका प्रथम अक्षर मात्र लघु, मध्य और अन्तका अक्षर गुरु हो, उसकी 'य' संज्ञा जानना चाहिये। 'भुजङ्गप्रयातं यः' इत्यादि जगह पर 'य' 'ज्ञाका' प्रयोजन होता है।

३। जिस तीन वर्णोंका मध्य वर्ण ही लघु (आदि और अन्तका अक्षर गुरु) उन तीन वर्णोंका "र" कहते है। "स्रग्विणी रः" इत्यादि स्थलमें प्रयोजन पड़ता है।

४। अन्तगुरु (अर्थात् आदि और मध्यवर्ण लघु, केवल शेष अक्षर गुरु) तीन वर्णोंको 'स' कहते है। "तोटकं सः" इत्यादि "स" संज्ञाके प्रयोजन स्थल है।

५। अन्तलघु (अर्थात् आदि और मध्य वण गुरु केवल शेष वर्ण लघु) तीन वर्णोंको "त" कहते हैं। "तनुमध्या त्यौ" इत्यादि सूत्रस्थलोमें "त" संज्ञाके प्रयोजन स्थल है।

६। मध्यगुरु (अर्थात् आदि अन्त वर्ण लघु मध्यवर्ण गुरु) तीन वर्णोंको "ज" कहते है। "कुमारललिता जसौ ग" इत्यादि स्थानोंमें "ज" संज्ञाका प्रयोजन है।

७। आदि गुरु, मध्य और अन्त वर्ण लघु, इस प्रकारो तीन वर्णोंको "भ" कहते है। "चित्रपदा भौ गौ" इत्यादि सूत्र 'भ' संज्ञाके प्रयोजनस्थल है।

८। क्रमशः तीन लघुवर्णोंको "न" कहते है। "दण्डको नौ रः" इत्यादि सूत्र 'न' संज्ञाके प्रयोजनस्थल हैं।

९। गृ यह वर्ण ग्रहण करनेसे केवल एक ही लघुवर्णका परिचायक हुआ है। एक लघुवर्णको 'ल' कहते है। यह तो

पहिले ही कहा गया है, ग और ल तीन वर्णोंका जनानेवाला नहीं है। "गुरुरेको गकारस्तु लकारो लघुरेककः" इत्यादि। ल शब्दका अर्थ लघु है, अतः इस सूत्रसे ही ह्रस्ववर्णकी लघु संज्ञा की गयी। "लः समुद्रा गणः" इत्यादि सूत्र 'ल' संज्ञाके प्रयोजनस्थल हैं।

१०। इस सूत्रसे पदके अन्तस्थित लघुवर्णको 'ग' गुरु संज्ञा अतिदिष्ट हुई, "गावन्त आपीढ़" इत्यादि सूत्रमें 'ग' संज्ञाका प्रयोजन है।

११। संयुक्त व्यञ्जन वर्णके पूर्व्ववर्ण और अनुस्वार, विसर्ग, जिह्वामूलीय, ( कवर्ग ) उपध्मानीय वर्णके लघु पूर्व्व वर्णकी गुरु संज्ञा अतिदिष्ट हुई।

१२। द्विमात्र गुरुवर्णकी "ज" अर्थात् गुरु संज्ञा विधान हुई।

१३। इन द्विमात्र गुरु वर्णोंकी दो लघुवर्णोंकी तरह गणना होगा।

१४। विशेष विधि परित्याग करके ग्रन्थ परिसमाप्तिपर्य्यन्त "ग्लौ" इस वर्णका अधिकार होगा जैसे "आसुरी पञ्चदश", २।४ इस सूत्रमें वृत्तिकारने लिखा है। "तानि च अक्षराणि ग्लौ इत्यधिकारवशाद्गुरूणि लघूनि च" इत्यादि।

१५। इस छन्दः शास्त्रमें वसु शब्दसे गुरु लघु आठ वर्णोंको समझना चाहिये। लोकप्रसिद्ध अन्य शब्द लेनेका उपलक्षणमात्र यही सूत्र है। अर्थात् जैसे वसु शब्दसे ८ समझना चाहिये और समुद्र शब्दसे ४, इन्द्रिय शब्दसे ५ इत्यादि जिस जिस अर्थो में जो जो शब्द संसारमें प्रसिद्ध हैं इस छन्दः शास्त्रमें भी उस उस ही अर्थमें उन उन शब्दोंका प्रयोग होगा।

---

# द्वितीय अध्याय

१। इसके आगे यह शास्त्रपरिसमाप्तिपर्य्यन्त "छन्दः" यह अधिकृत होगा। इस छन्दःशब्दसे अक्षरसंख्या कही गयी।

२। इस सूत्रसे द्वादश सूत्र तक "गायत्री" छन्दका अधिकार होगा, अर्थात् "तान्युष्णिक्" इस सूत्रके पहिले सूत्रतक वक्ष्यमाण छन्दकी गायत्री संज्ञा होगी।

३। एकाक्षर छन्दको दैवी गायत्री कहते हैं। गायत्री उष्णिक् प्रभृति सात प्रकार छन्दोंके प्रत्येकको आर्षी, दैवी, आसुरी, प्राजापत्य, याजुषी, साम्नी, आर्ची और ब्राह्मीभेदसे ८ प्रकार। कौन किस प्रकार कितने अक्षरोंमें अन्तर्गत होगी सो अच्छीतरह समझानेके लिये ( १० पृ० ) मण्डल दिया गया हैं। उसके बनानेकी रीति यह हैं यथा—चतुरङ्ग ( सतरञ्ज ) क्रीड़ाके तरह आठ पंक्तिमें ६४ चौषट कोष्ठ द्वारा एक मण्डल बनाओ। फिर उसकी प्रथम पंक्तिके प्रथम कोष्ठमें आर्षी यह नाम लिखो। द्वितीयादि घरोंके उपरिभागमें क्रमानुसारसे गायत्री, उष्णिक्, अनुष्टुप्, वृहती, पंक्ति, त्रिष्टुप्, जगती छन्दका नाम लिखो। फिर द्वितीय पंक्तिमें प्रथम घरसे "दैवी" शब्द लिखकर संज्ञा समझानेके लिये द्वितीय घरमें १ अङ्क बैठाओ।

४। पञ्चदशाक्षर छन्दका नाम आसुरी गायत्री। पूर्व्वोक्त मण्डलके तृतीय पंक्तिके पहिले घरमें "आसुरी" यह नाम लिखकर द्वितीय घरमें १५ अक्षर बैठाओ।

५। आठ अक्षरके छन्दका नाम प्राजापत्या गायत्री कहते है। पूर्व्वोक्त मण्डलकी चतुर्थ पंक्तिके प्रथम घरमें "प्राजापत्या" यह नाम लिखकर द्वितीय घरमें ८ अङ्क बैठाओ।

६। वेदोक्त षड़क्षर छन्दोको याजुषी गायत्री कहते हैं। उस मण्डलकी पञ्चम पंक्तिके घरमें "याजूषी" यह नाम बैठाकर द्वितीय घरमें ६ अङ्क लिखो।

७। वेदोक्त द्वादशाक्षर छन्दका नाम साम्नो गायत्री हैं। उस मण्डलकी षष्ठ पंक्तिके प्रथम घरमें "साम्नी" यह नाम लिखकर द्वितीय घरमें १२ का अङ्क लिखो।

८। वेदोक्त अष्टादशाक्षर छन्दको आर्चीं कहते है। उस मण्डलकी सप्तम पंक्तिके प्रथम घरमें "आर्चीं" यह नाम लिखकर द्वितीय घरमें १८का अङ्क बैठाओ।

९। षष्ठ पंक्तिसे साम्नी गायत्रीको दो दो अङ्क दो दो संख्यासे बड़ता हुआ क्रमसे तृतीय घरसे अष्टम घर पर्य्यन्त बैठागी। अर्थात् द्वितीय घरमें जो साम्नो गायत्रीका अङ्क १२ है, यह दो की संख्यासे बड़ता हुआ तृतीय घरसे १४, चतुर्थमें १६, पञ्चममें १८, षष्ठमें २०, सप्तममें २२, अष्टममें २४ का अङ्क होगा।

१०। सप्तम पंक्तिसे आर्चीं गायत्री तीन तीन संख्यासे बड़ती हुई तृतीय घरसे अष्टम घरतक यथाक्रमसे बैठेगी, अर्थात् द्वितीय घरमें जो आर्चीं गायत्री की १८ संख्या है। वह तिन तिनसे बड़ती हुई तृतीय घरमें बैठेगी २०, चतुर्थमें २४, पञ्चममें २७, षष्ठमें ३० सप्तममें ३३ और अष्टममें ३६।

११। चतुर्थ पंक्तिसे प्राजापत्या गायत्री चार चार कि संख्यासे बड़ती हुई तृतीय घरसे अष्टम घरतक यथाक्रमसे बैठेगी। अर्थात् चतुर्थ पंक्तिके द्वितीय घरमें प्राजापत्या गायत्री कि संख्या हैं ८, अतएव ४ से वढ़ती हुई तृतीय घरमे वैठेगी १२, चतुर्थमे १६, पञ्चममें २०, षष्ठमें २४, सप्तममें २८, और अष्टममें बैठेगी ३२।

१२। जिन सब गायत्रीयोंके लिये कोई विशेष विधान नहीं है, वें ( अर्थात् दैवी, याजुषी ) एक एक को संख्यासे बड़ती

हुई तृतीय घरसे अष्टम घरतक बैठेगी। अर्थात् द्वितीय पंक्तिके द्वितीय घरमें जो दैवी गायत्री की संख्या हैं १, वह तीसरे घरमे होगी २, चतुर्थमें ३, पञ्चममें ४, षष्ठमें ५, सप्तममें ६, अष्टममें ७ होगी। इस प्रकार पञ्चम पंक्तिके द्वितीय घरमें याजुषी गायत्री की संख्या है ६, वह बढ़ती हुई तृतीय घरमें १, चतुर्थमें ८, पांचवेमें ९, षष्ठमें १०, सप्तममें ११, और अष्टममें १२ की संख्या पूरी होगी।

१३। तृतीय पंक्तिमें आसुरी गायत्री एक एक को संख्या छोड़ती हुई तृतीय पंक्तिके द्वितीय घरमें अष्टम घरतक यथाक्रमसे बैठेगी। अर्थात् तृतीय पंक्तिके द्वितीय घरमें आसुरी गायत्री की संख्या हैं १५, यहांसे १ छोड़कर तृतीय घरमें बैठेगी १४, चतुर्थमें १३, पञ्चममें १२, षष्ठमें ११, सप्तममें १०, और अष्टम घरमें ९।

१४। गायत्री छन्दके अगाड़ी अर्थात् द्वितीय घरसे यथाक्रमसे उष्णिक् अनुष्टुप्, बृहती पंक्ति, त्रिष्टुप् और गायत्री (जगती) छन्द होंगे। अर्थात् द्वितीयादि घरके अङ्कानुसार यथाक्रमसे गायत्रीकि तरह उष्णिक्, आदि कोभि प्रकार भेद समझना होगा।

१५। याजुषी, साम्नी, और आर्ची गायत्री एकत्रित होकर ३६ अक्षरोंमें २ ब्राह्मी गायत्री होगी। इस प्रकार याजुषी, साम्नी, आर्ची, ~~और~~ उष्णिक् एकत्रित होकर ४२ अक्षरमें ब्राह्मी उष्णिक्, एवं याजुषी, साम्नी, आर्ची, अनुष्टुभ् एकत्रित होकर ४८ अक्षरमें एक ब्राह्मी अनुष्टुभ्। एवं याजुषी, साम्नी, आर्ची ~~और~~ बृहती एकत्रित होकर ५४ अक्षरोंमें एक ब्राह्मी बृहती। एवं याजुषी, साम्नी, आर्ची ~~और~~ पंक्ति एकत्रित होकर ६० अक्षरोंमें एक ब्राह्मी पंक्ति। एवं याजुषी, साम्नी, आर्ची ~~और~~ त्रिष्टुभ् एकत्रित होकर ६६ अक्षरमें एक ब्राह्मी त्रिष्टुभ् होगा, एवं याजुषी, साम्नी, आर्ची, जगती एकत्रित होकर ७२ अक्षरोंमें एक ब्राह्मी जगती होगी। उस मंडलके अष्टम पंक्तिके प्रथम घरमें "ब्राह्मी" यह नाम लिखकर द्वितीय

घरमें ३६, तृतीयमें ४२, चतुर्थमें ४८, पञ्चममें ५४, षष्ठमें ६०, सप्तममें ६६, और अष्टममें ७२का अङ्क स्थापन करना होगा।

१६। प्राजापत्या, आसुरी और दैवी गायत्री एकत्रित होकर २४ अक्षरोंमें एक आर्षी गायत्री होगी। एवं प्राजापत्या, आसुरी, दैवी और उष्णिक् एकत्रित होकर २८ अक्षरोंमें एक आर्षी उष्णिक् एवं प्राजापत्या, आसुरी, दैवी और अनुष्टुभ् एकत्रित होकर ३२ अक्षरोंमें एक आर्षी अनुष्टुभ् होगा एवं प्राजापत्या, आसुरी, दैवी और वृहती एकत्रित होकर ३६ अक्षरोंमें एक आर्षी वृहती ; प्राजापत्या, आसुरी, दैवी और पंक्ति एकत्रित होकर ४० अक्षरोंमें एक आर्षी पंक्ति एवं प्राजापत्या, दैवी और त्रिष्टुप् एकत्रित होकर ४४ अक्षरोंमें एक आर्षी त्रिष्टुप् एवं प्राजापत्या आसुरी और दैवी जगती एकत्रित होकर ४८ अक्षोरोंमें एक आर्षी जगती होगी। उस मंडलकी प्रथम पंक्तिके प्रथम कोष्ठमें "आर्षी" यह नाम लिखकर, द्वितीय कोष्ठमें २४, तृतीयमें २८, चतुर्थमें ३२, पञ्चममें ३६, षष्ठमें ४० सप्तममें ४४ और अष्टममें ४८का अङ्क स्थापन करना होगा। इन सव सूत्राङ्क-सङ्कलनमें यो मंडल होगी वह मंडल पिछाड़ि ( १० पृः ) दीखा दिया हैं। यह मंडल ही केवल गायत्री प्रभृति छन्दोंके प्रकार भेद समझनेके लिये उत्तम उपाय है।

---

# तृतीय अध्याय

१। इस अध्यायकी समाप्तिपर्य्यन्त "पाद" यह ही अधिकृत होगा।

२। गायत्री प्रभृति छन्दोंके पादमें जहांपर अक्षर की संख्या कम होगी, यहांपर इय् उव् प्रभृतिसे पूरण करना होगा। जैसे ("तत् सवितुर्वरेण्यम्" इस गायत्री छन्दके पादमें ८ अक्षरकी जगह ७ अक्षर होनेसे "तत् सवितुर्वरेणियम्" इस प्रकार पूरण करना होगा। इत्यादि।)

३। जहां जहांपर गायत्रीका पाद ग्रथित होगा वहां वहां पर ही अष्टाक्षर ग्रहण करने होंगे।

४। जहांपर जगतीका पाद ग्रथित होगा वहांपर द्वादशाक्षर ग्रहण करने होंगे।

५। जहांपर वैराज पाद कथित होगा वहांपर दशाक्षर ग्रहण करने होंगे।

६। जहांपर त्रिष्टुप्का पाद कथित होगा, वहांपर एकादशाक्षर समझने होंगे। इस अध्यायमें ३—६ तकमें परिभाषासूत्र।

७। पूर्व्वोक्त पादानुयायी छन्दः कहीं पर एक पाद, कहीं दो पाद, कहीं तिनपाद, कहीं चारपाद होगा। गायत्रीछन्दः त्रिपाद भिन्न नहीं होगा। कारण यह है कि अष्टाक्षर चार पादमें अनुष्टुप्छन्दः होता है।

८। षड़क्षर चारपादमें २४ अक्षरोंमें आर्षी गायत्री छन्द होता है। प्रत्येक सूत्रका उदाहरण वृत्तिमें देखो।

९। किसी वेदमें सप्ताक्षर त्रिपादसे २१ अक्षरोंमें भी गायत्री छन्दः होता है।

१० । उस सप्ताक्षर त्रिपाद गायत्रीको "पादनिचृत्" कहते हैं । प्रयोगकर्त्ताके शुभादृष्ट जानानेके लिये ही यह संख्या कही हैं ।

११ । जिस गायत्री छन्दके प्रथम पादमें ६ अक्षर, दुसरेमें ८ अक्षर और तीसरेमें सात अक्षर होते है, उस त्रिपाद गायत्रीको "अतिपादनिचृत्" कहते हैं ।

१२ । जिस गायत्री छन्दके प्रथम दो पादोंमें ६ अक्षर और तृतीय पादमें ६ अक्षर, उस त्रिपाद गायत्रीको "नागी" कहते हैं ।

१३ । जिस गायत्रीके प्रथम पादमें ६ अक्षर, द्वितीय और तृतीय पादमें ६ अक्षर है, उस गायत्रीको "वाराही" कहते है ।

१४ । जिस छन्दके प्रथम पादमें ६ अक्षर, द्वितीय पादमें सात अक्षर, और तृतीय पादमें आठ अक्षर, उस छन्दको "वर्द्धमाना गायत्री" कहते हैं ।

१५ । जिस छन्दके प्रथम पादमें आठ अक्षर, द्वितीय पादमें सात, तृतीय पादमें छह अक्षर है, उस छन्दको "प्रतिष्ठा गायत्री" कहते हैं ।

१६ । जगती छन्दका एकपाद (द्वादशाक्षर) एवं गायत्री छन्दका एक पाद (अष्टाक्षर)से "द्विपाद्विराट्" नामक गायत्री छन्द होता हैं ।

१७ । त्रिष्टुप् छन्दके तिन पादमें (अर्थात् एकादशाक्षर तिन-पादको) "त्रिपाद् विराट् गायत्री" छन्द कहते हैं ।

(यहांपर ही गायत्रीका अधिकार समाप्त हुआ)

---

१८ । जिस छन्दके दो पाद अष्टाक्षर और एक पाद द्वादशा-क्षरका हो, उस त्रिपाद छन्दको ही "उष्णिक्" कहते हैं । उस जगह अष्टाक्षर एवं द्वादशाक्षर पादके आगे पिछे किसी क्रमविवक्षा नहीं हैं । केवल पादसंख्यामात्रका ही विधान हैं ।

१९। जिस छन्दका प्रथम और अन्त्यपाद अष्टाक्षर एवं मध्यपाद द्वादशाक्षर हो, ऐसे उष्णिक्की "ककुभ्" संज्ञा होती है।

२०। जिस छन्दका प्रथम पाद द्वादशाक्षर एवं शेष दो पाद अष्टाक्षर, उस छन्दको "पुर उष्णिक्" कहते हैं।

२१। जिस छन्दका शेषपाद द्वादशाक्षर एवं प्रथम दो पाद अष्टाक्षर, उस छन्दको "परोष्णिक्" कहते हैं।

२२। सप्ताक्षर चार पादको भी उष्णिक् छन्द कहते हैं।

( उष्णिक्का अधिकार समाप्त )

---

२३। अष्टाक्षर चतुष्पाद की "अनुष्टुप्" संज्ञा होते हैं।

२४। अष्टाक्षरका एकपाद एवं द्वादशाक्षरके दो पाद—ऐसी तीनपादसे भी कभी 'अनुष्टुप्' होते हैं।

२५। जिस छन्दका प्रथम एवं शेष पाद द्वादशाक्षर, एवं मध्यपाद अष्टाक्षर, अथवा प्रथम दो पाद ही द्वादशाक्षर एवं शेषपाद अष्टाक्षर, इस द्विविध छन्दको भी "अनुष्टुप्" ही कहते हैं।

( अनुष्टुभ्का अधिकार समाप्त )

---

२६। जिस छन्दका एक पाद द्वादशाक्षर एवं तीनपाद अष्टाक्षर उस छन्दको "बृहती" कहते हैं।

२७। जिस छन्दका तृतीय पाद द्वादशाक्षर, एवं १म, २य, और ४र्थ पाद अष्टाक्षर, उस बृहती छन्दका "पथ्या" संज्ञा होती हैं।

२८। जिस छन्दका द्वितीय पाद द्वादशाक्षर एवं अन्य तीन पाद अष्टाक्षर, उस छन्दको "न्यङ्कुसारिणी बृहती" कहते हैं।

२९। क्रोष्टुकि आचार्य्य इस "न्यङ्कुसारिणी बृहती"को ही "स्कन्धोग्रीवी" नामक छन्द कहा हैं।

३०। यास्क आचार्य्य इस न्यङ्कुसारिणी को ही "उरोबृहती" कहा है।

